यो अतिथिम्हि आसीने अदत्त्वा भुंजति भोजनं ॥
तस्माहं कौशिक ब्रूमि भुंजाहि च ददाहि च ।
आर्यमार्गसमापन्नो एकांशं विन्दते सुखं ॥

मातलि पि उपसंक्रान्तो ॥ कौशिक आह ॥

नाहं क्रिणामि नापि विक्रिणामि
न चापि मे संनिधि अस्ति किंचि ।
परीत्तरूपं मम भोजनं इमं
श्यामाकप्रस्थं नलमेयो पंचानां ॥

मातलि आह ॥

सत्यं तस्य हुतं भोति सत्यं चापि समाहितं ।
यो अतिथिम्हि आसीने दत्त्वा भुंजति भोजनं ॥
तस्माहं कौशिक ब्रूमि भुंजाहि च ददाहि च ।
आर्यमार्गसमापन्नो एकांशं विन्दते सुखं ॥

शक्रो पि उपसंक्रान्तो ॥ कौशिक आह ॥

नाहं क्रिणामि नापि विक्रिणामि
न चापि मे सन्निधि अस्ति किंचित् ।
परीत्तरूपं मम भोजनं इमं
श्यामाकप्रस्थं नलमेयो घणां ॥

शक्रो आह ॥

सरस्वतीं सो जुहोति चाक्रतां गमये अपि ।

1. C yâ ati°. — 2. C natvaha kau° BC °çika krumi bhuñ°. — 3. C °rgasya sampanno ekâñça vi°. — 4¹. BC mâtari pi° B °krântau kau° C °krânto evam samvindate sukham | kau°. — 5. C °vikriṇâmi° C °me sannidhi asti kiñcit | pa°.
7. C °ima syâmâshapra° BC °sthaṁ nâlam e° C °sho pañcânâm ‖. — 9. C mâtari â°. 10. B satyam satya hutam bho° C satyam satyam hutam bho°.
11. B °âçine da° C °âçina da°. — 12. BC natsaham° B °ka kruhi bhuñ° C °ka krumi bhuñ° BC °dâhi ca â°. — 13. C °rgasampanno ekâñçam vi°. — 14. C °nto evam samvindate sukham | kau°. — 15. BC na câpi san (C °sam)nidhi a°.
17. BC °janam | i° C °syâmâshapra° BC °sthaṁ nâlam ehâ(C °shâm) sharṇṇâm ‖. — 20. BC °svati so ju° B °juhâti câhadâm gama° C °câhu âgama° L °câhutâm sama° BCL °mayâm api |.



4.

यो अतिथिस्मिं आसीने दत्वा भुंजति भोजनं ॥
नत्वाहं कौशिक ब्रू[117b]मि भुंजाहि च ददाहि च ।
आर्यमार्गसमापन्नो एकांशं विन्दते सुखं ॥

कौशिक आह ॥

उदारवर्णा इति ब्राह्मणा इमे
अयं च वो शुनको किस्य हेतु ।
उच्चावचां वर्णनिमां निदर्शयि
आख्याय मे को नु भवे भवन्तो ॥

शक्र आह ॥

चन्द्रो च सूर्यो च इहागता ते
अयं च सो मातलि देवसारथिः ।
अहं च शक्रो त्रिदशान ईश्वरो
अयं च सो पंचशिखो . . . . . ति ॥
यस्यैव प्रतिगृह्णाति अन्नं च पानं च कौशिक ।
पाणिस्वरं कुम्भथूनं मृदंगानां स्वराणि च ।
सुप्तं न प्रतिबोधेन्ति प्रतिबुद्धो च नन्दति ॥

. . . . . . . . . . . . . . . . . . . . . . . . .

तुवं नो आसी पुरिमासु जातिषु
त्वं कौशिका मत्सरिपापधर्मः ।
तुभ्यानुकंपाय इहागता स्म
मा पापधर्मो निरयं व्रजेसि ॥
ये मत्सरी रोषकपापधर्मा

1. B ye tithi° C yā tithismiṁ āsine da° B °āsine adatvā°. — 2. BC natvahaṁ kauçika krumi bhuñi°. — 3. C °rgasya saṁpanne°. — 5. B °hmaṇa i° kho kimasya hetuḥ | C °kho kima hetuḥ |.

7. B °cckavo varṇṇa° C °celvaco varṇṇa° bhūṁ darçaye na ākhyā° B °rçaye nanu ākhātamedae nu bha° C °ko anubha°. — 10. C °ihogatau ayaṁ° B °hāgato ayaṁ° C °mātad da°.

12. C °çānam īçva° B °çāna īçva° BC °ro | ayaṁ° C °yaṁ ca pañcaçirahoti | yasyai° B °pañcaçishoti || yasyai°. — 14. B °kauçikaḥ pāṇi° C °çika pāṇi°. — 15. B °mbhabhūyaṁ mṛ° C °mbhatūṇikaṁ mṛ° BC °daṅgāhaṁ varāṇi su°.

16. BC suptānāṁ pra° nti | pratibu°. — 18. BC °jñāti pu° B °purimasu jātisu | tvaṁ° BC °çiko matsa° B °tsariyāpadharmaḥ tu° C °tsarirahakapāpadharmā tu° — 20. B C °sma | mā°.

22. B °dharmo pra° C °çravaṇābrā° BC °ṇānāṁ pā°.

प्रद्वेषका श्रमणब्राह्मणानां ।
पापानि कर्माणि समाचरित्वा
इतो च्युताः ते निरयं व्रजन्ति ॥
ये चेह दानानि ददन्ति पण्डिता
प्रसन्नचित्ताः श्रमणब्राह्मणेषु ।
पुण्यानि कृत्वा इह जीवलोके
इतो च्युतास्ते सुगतिं व्रजन्ति ॥

कौशिक आह ॥

एषो अद्यैवं करिष्यामि पुण्यं
दास्यामि दानं श्रमणब्राह्मणेषु ।
एतेहि दद्यादहमन्नपानं
नाहं अदत्त्वा अमृतं पि पास्ये ॥
एवं च मे ददतो सर्वकालं
भोगा च मे व सर्वा क्षिपिहन्ति ।
ततो अहं सुगतिं प्रव्रजिष्यं
प्रहाय कामानि तथाधिकानि ॥

नगोत्तमे गिरिवरगन्धमादने
मोदन्ति देववराधिपात्मजा ।
उपागता ऋषिवर सर्वं पूजितुं
सुपुष्पितां द्रुमवरशाखां गृह्णिय ॥
शुचिं सुगन्धां त्रिदशेहि सत्कृतां
सुपुष्पितां अमरवरेहि सेवितां ।

2. C pāpāṇi dharmāṇi° B °rmāṇi sa° C °ito cuto te nilayaṁ° BC °janti yad iha dā°. — 4. C °ni dadāti pa° C çravaṇabrā° B °brāhmaṇabrāhma°.

6. C °iha eyu°. — 9. B °dyaiva kariṣye pu° C °riṣya pu° °çravaṇabrā°.

11. C °hi ete dānaṁ dadyā nāhaṁ° L °hi ete dadeyahi dānaṁ nā° B °dyād dānaṁ nāhaṁ° BC °adatvā amṛ° C °pipāsā |. — 13. C °bhogāya ca me° BC °me vā sarvā kṣhipi-(C °pri)hanti | L °me vā sarva kṣhipihanti |. — 15. BC °ahaṁ pravrajiṣyāmi prahā° C °dhikāmāni nago°.

17. BC °ragandhamā° B °dane | mo° C °modanti deva amarādhi°. — 19. B upāgamā ṛi° C °game ṛi° °sarvapū° °gṛhṇiya ça° B °gṛhṇiya ça°.

21. BC çuciṁ | sugandhā trida° °kṛitā supushpitā ama° B °sevitā tāṁ° C °sevitāḥ tāṁ°.

शाखां ददेन्सुर्वंग चक्षु मारिष
यथैव मो शक्र तथैव सो तुवं ॥
तां याचमानां अनुद्वपि ब्राह्मण
इत्यश्रीपि कलहं उदीरये ।
न मह्यं पुष्पेहि इहार्थं विद्यति
या चैव वो श्रेयतरा (गृह्णातु) ॥
तदिमं त्वं एव मनीष ब्राह्मणा
जानाहि मो मारिष या नु श्रेया ।
यस्यैव वो मारिष तां ददिष्यसि
सा एव वो श्रेयतरा भविष्यति ॥
अकार्यमेतं वचनं सुभाषिका
स ब्राह्मणो क्रोधवश्यं विमाहरे ।
गत्वान भूताधिपतिं हि पृच्छथ
सो एव वो व्याख्याति या नु श्रेया ॥
तदापि तायो परमार्थदर्शिनो
उद्धारिका वर्णबलेन अर्थिका ।
गत्वान वोचन्त्रिदशाधिपस्य
जानाहि मो मारिष का नु श्रेया ॥
तान्दृष्ट्वा च[117b]नात्तमना पुरंदरो
इत्यब्रवीत् चात्तमनो सर्वेषु ।
..... पूर्वे सदृशा सुभाषिका

1. B tāṁ hi çākhāṁ dadet sarvaṁgamāsi mā° C tāṁ hi çākhāṁ dadu sarvāṅgamāsi mā° C °thaivaṁ mo ça°. — 3. B tāṁ pācamā° C °mānām anu° BC °hmaṇa | i° C °hratimi kalaham udi°. — 5. B °hyaṁ puṇyaṁ pushpe° C °hyaṁ puṇyaṁ pushpe° BC °yā yeca bodha çreyatarā sopi ta°.

7. BC °yaṁ tvāṁ eva° B °mīkshe brā° C °hmaṇā jā° BC °nāhi mārsha jāna çreyā ya°. — 9. C yasya evaṁ maḥ mārisha tvadadishyasi° B °syaiva vo mārisha tvaṁ dayi° BC °shyasi | sā° C °evaṁ no çre°.

11. BC °ṭriko brāhma° C °hmaṇaṁ krodhaça° BC °hdaṁ vyākare tvāna°. — 13. C °patiṁ hi pṛi° B °patiṁ hi mpicha° BC °tha | so eva(C °vaṁ) vo jñātisya(C °sye)ti yā tu çreyatarā pi tā°. — 15. B °rika varṇṇabalena ° arthiko tā gatvā° C °varṇṇabalena ° arthiko āgatvā°.

17. C °tvānaivam ava° BC °vocat | tri° hi māṁ mārsha kā°. — 19. C °purandaro° BC °vīt | ā° rvesu yushme°.

21. B °dṛiço su° BC °suṅkiko rthebha pūrve ka° C °rayet | .

को वेहपुब्बं कलहं उदीरये ॥
यो सब्बलोके चरति महामुनि:
नामेन सो नारदो सच्चविक्कमो ।
सो अब्रवीत्पब्बते गन्धमादने
गन्त्वान भूताधिपतिं हि पुच्छथ ॥
इतो सो उत्तरतो दिशायां
गंगाय कूले हिमवन्तपार्श्वे ।
सो कौशिको दुल्लभपानभोजनो
तस्स सुधां प्रेषयि देवसारथि: ॥
अग्गिं जुहन्तस्स प्रतिट्ठतो मम
प्रभंकरो लोकतमोनुदो यथा ।
आदिच्चलोकम्हि तथेव ईर्यसि
का देवता किस्स इहागतो सि ॥
शंखोपमं श्वेतमतुल्यसन्निभं
मनोज्ञगन्धं प्रियरूपदर्शनं ।
न दृष्टपुब्बं मय चक्षुषेदृशं
का देवता किन्तु ददासिदं मम ॥
अहं महेन्द्रेण महर्षि प्रेषितो
सुधाहरिं त्वां त्वरितं उपागमि ।
जानाहि मां मातलि देवसारथिं
भुंजाहिमां कांचिनु भोगमुत्तमं ॥
भुक्ता हिमां द्वादश . . . . हि पापका
क्षुधापिपासां अरतिं ज्वरं क्रमा ।

2. BC °nîḥ mâmena ° kramo so a°. — 4. BC °vî || parvate° C °rvate andha°.
6. C °uttarâto° C °gaṁgâkûle°. — 8. BC °jano | ta° C °rathi a° B °rathiḥ a°. —
10. B agnijuha° C agnihutaṁ tasya pratisthato° B °tishṭato°.
12. C °yathaivaṁ ishyasi kâ° B °mniṁ yatheva îryasi° C °vatâ kasya ihagatâ si | . —
14. BC °khopamâṁ çeta° C °tamatulyasaṁnibhâ manogandhâṁ pri° B °samnibhâṁ mano-gnagandhâṁ pri° BC °rçanâṁ na dṛi°.
16. BC °pûrve ma° C °mayaṁ cakshuḥ edriçakâ de° BC °vate kin tu adâ° C °dâsidaṁ°. — 18. C °ndrena mârsha preshitâḥ su° BC °mdhâtari mâṁ(C °mâ) tvari°. — 20. C °mâtari de° B °tali deva° C °hi mâ kâṁ° B °bhojam u° C °bhojanam uttaṁ | .
22. BC °dvâdaçehi pâ° C °pakaṁ kalu° B °pakât kalandhâ° BC °pipâçâṁ ara ° kramâ kro°.

क्रोधोपनाहं च विवादपैशून्यं
शीतोष्णतष्णीतरसं च उत्तमं ॥
न मातलि कल्पति मह्य भुंजितुं
पूर्वं अदत्वा इति ब्रुवन् अनुत्तमं ।
न चापि एकस्य न मह्य वर्णितं
असंविभागो हि सुखं न विन्दति ॥
मित्रं श्वोपायिकं पारिपन्थिका
स्त्रीघातका ये प्रहरन्ति अर्थं ।
सर्वे पि ते मत्सरिणे समा मता
प्राप्तं अदत्वा अमृतं पि गाले ॥
ता प्रेषिता देवराजेन आशाया
कन्या चतस्रो तपनीयसन्निभा ।
सुधां पि आदाय प्रतिग्रहार्थी
तं आश्रमं यत्र अभूषि कौशिकः ॥
दृष्टा तु ताः अर्थदर्शी मतीमां
प्रभासयन्तीयो अनन्तराश्रिताः ।
स्थिता चतस्रो प्रमदा चतुर्दिशं
सो दानि कौशिक अध्यभाषिय ॥
पुरिमां दिशाम्तिष्ठसि देवते त्वं
अलंकृता तारवरा व ओषधी ।
पृच्छामि ते कांचनवेदिविग्रहे

1. B °vivâdupai° C °vivâdan paiçunya çî° B °ṇyaṁ çîtoshṇatṛshṇarasaṁ° C °ndelvarasaṁ°. — 3. B na pâtale° C °nṛtare kalpayati mahyaṁ bhuñ° B °iti kruvan° C °iti dhruvaṁ nuttamaṁ cipi°. — 5. C °mahyaṁ va° BC °vallitaṁ | asaṁ° C °bhâgaṁ hi su° BC °ndati mi°.

7. B mitraṁ obi pârihaṁ rthikâ strighâ° C mitra oparipatthikâ strighâtakâ° BC °kâ ye svapanti arthaṁ (C °rtha) te sa°. — 9. B °matsarite pañcame samanta prâ° C °matsari pañcame samatâ prâ° BC °prâptâṁ(C °ptâ) âdatvâ moritaṁ pi no sae |.

11. B tâṁ pre° C tâṁ devatâ pre° B °tapanîpasaṁnibhâṁ | C °nnibhâṁ |. — 13. BC sudhâpi â° C °grahântâṁ âçra° B °rhâṁ tâṁ â° shi koçikâṁ ||. — 15. B °shṭvânta tâḥ° C °shṭvânta tâm athadarço matimâṁ° B °rço patimâṁ pratibhâsayanti pañcânantare çritaḥ sthi° C °pratibhâsayati pañcanantare çito sthi°.

17. C sthitâḥ ca° BC °pramadâ° °rdiçaṁ | so° C °çiko adhyabhâshito | B °shitha pu°. — 19. C °diçaṁ tishṭhasi devata tvaṁ° BC °tvaṁ | a° B °kṛito gâtravacâ ca auçarâ pṛi° C °kṛito târavalâ ca osarâ pṛi°.

21. C pṛchati te kâṁcanavedavaḍi° B °he || â° C °khyâsi me tvaṁ° B °vatâ çi°.

आख्याहि मे त्वं कतमासि देवता ॥
श्रिरी हमस्मि मनुजेषु संमता
अक्षुद्रसत्त्वा परिसेविनी सदा ।
सुमेधिनी तुह्य सकाशमागता
तं मां सुधाये वरअन्न भाजय ॥
शीलेनुपेतं चरणेन बुद्धिये
उपेतसत्त्वं मनुजेन कर्मणा ।
त्वया उपेतो श्रिरिजातिमन्तिया
प्रेष्येति दासं विय भोगवां सुखी ॥
अन्यो पि दासो अलसो अशिल्पको
सुदुर्गतो वापि नरो अरूपवां ।
त्वया उपेतो श्रिरिजातिमन्तिया
तदिदमसाधु यदिदं त्वया कृतं ॥
प्रभा[118a]सयन्ती यशसा यशस्विनी
मनोरमैशाह्वयनां दिशां प्रति ।
पृच्छामि त्वां कांचनवेदिविग्रहे
आचिक्ष मे त्वं कतमासि देवता ॥
श्रद्धाहमस्मि मनुजेषु सम्मता
अक्षुद्रसत्त्वा प्रतिसेविनी सदा ।
सुमेधिनी तुह्य सकाशमागता
तं मां सुधाये वरअन्न भाजय ॥
भार्यापि मे स्यो सदृशा हि सत्कृता

2. BC °m asmiṁ ma° C °sma sammatāḥ a° B °tā | a° C °satvo parise° B °satva pari- satvaparise° BC °sadā su°. — 4. BC °kāça āga° B °tā | taṁ mā su° C °taṁ sā su° B °sudhāya vara °gaya çi° C °gayaḥ çi°.

6. C çicenu° B çilenupe° BC °petāṁ ca° B °buddhiḥ | ya u° C °ye | upeta sa° BC °satvā pra° C °rmaṇāḥ tva° B °ṇā tva°. — 8. C tvayopetaṁ giriyāntimāntiyāṁ preṣitā saṁ viya° B °manti | yā preṣati dā° C °sukhiṁ | B °khī sthe°. — 10. BC °çilpa | tāṁ sudugatā vāpi° C °narā anupavāṁ | B °naro rūpavāṁ tva°.

12. B °peto jāti° C °petaṁ yātimanteya ta° BC °tad idaṁ asādhu | ya° C °idaṁ tvāyā°. — 14. B °sayanti yaça° C °sayantā yad idaṁ yaçasā° BC °manomayā sāhvayanā diçaṁ°.

16. C °ciksha me tvaṁ°. — 18. C çuddhāha° B çraddhāha° BC °m asmiṁ ma° C °sha saṁmatā | a° B °tā | a° C °tisediya sa° BC °sadā su°. — 20. BC °kāça āga° B °taṁ māṁ sudhāya vara° C °taṁ sa suddhāya ca prajñāṁ varabhogaya | .

22. B °me sho sa° C °dṛçābhi satkṛ° BC °tkṛto kalyā ° rmāya pa(B °pra)tivratāya | .

तवो सुधाये वरमत्त भामय ॥
आग्राय येषामि कुर्वन्ति वणिका
सपुत्रदारा संघटन्ति एकतो ।
नं वर्षं हरति असनी च उत्थिता
तदिदमसाधु यदिदं त्वया कृतं ॥
आग्राये एके मनुजा धनार्थिका
नावां समारुह्य तरन्ति (सागरं) ।
आलम्बने तत्र सीदन्ति अथापि च
दुःखं निगच्छन्ति विनष्टपुण्याः ॥
सा मे च सन्तिके अपि च वयसे
विजाने मूढासि धूर्तानुवर्तिनी ।
न एतृशी अर्हति आसनोदकं
कुतो सुधां गच्छ न मे त्वं रोचसि ॥
का दृष्टासि ...... पिनद्धमंजरी
सीहांगदा कांचिप्रमृष्टधारणी ।
कृताम्बरक्षा सुपिनद्धकुण्डला
उशीरवर्णा प्रतिभाय शोभसि ॥
गते यथा प्रावृषि अत्र शारदे
अलंकृता लोहितमालिनी ..... ।
पृच्छामि त्वां कांचनवेदिविग्रहे
आचिक्ष मे त्वं कतमासि देवता ॥
हिरीयमक्षि मनुजान सम्मता
अक्षुद्रसत्त्वप्रतिसेविनी सदा ।

2. B °ya kshatrā° BC °ṇikā | sa° dārā pi saṃ° ekadā nam°. — 4. BC nam esha harati | asa° BC °tvayā na kṛi°.

6. B açāyise ke ma° C āsāyike ma° BC °taranti ālambe(C °bhya)°. — 8. C ālambhyate ta° B °ndnte ta° nti | athā° BC °pi ca evaṃ duḥkhaṃ° C °gachati vi° B °nti | vi° BC °shṭaprapuṇyāḥ(C °ṇyā) sa me°. — 10. BC sa me va santi api° BC °vijānāmi mūḍho si dhū° B °varttini | .

12. BC na etādṛiçaṃ arha°. — 14. B kā drashṭrām pi° C kā na draṃshṭrāsi pi° C °ddhamañjalī siṃhaṃ° BC °gadā(C °jā)kāñcapramṛ(C °ṛi)shṭa°.

16. C °ṇḍalāḥ udīnavaprati° B °bhati | . — 18. BC kāle yathā° C °tra çārade° B °mālini | C °linī pṛichā°. — 20. B °kāñcavedi° C °vaṭāḥ hi°.

22. C °m anuiṃ ma° na saṃmatā° B °mmate a° BC °drasatva(B °tvo)parise°.

सुखेषिणी तुह्य सकाश्रमागता
न तु त्वां शक्नोमि महर्षि याचितुं ॥
कायवंधातु इह स्त्री न विद्यति
जानामि धर्मेण सुगाथि याचसे ।
ते त्वां अयाचन्ति प्रसवाम्यहं
सुधाम[118b]हं जीवितं तं ददामि ते ॥
त्वामेवहं कांचनवेदिविग्रहे
आमन्त्रयित्वान प्रवेक्षि आश्रमं ।
त्वामेवहं सर्वगुणेन पूजये
तव अद्य त्वा अमृतं पि नो अन्नं ॥
तं आश्रमं पुष्पविचित्रसंस्तृतं
द्विजेहि घुष्टं रुचिरस्वरेहि ।
सा सुचरणी तं च प्रविष्टा आश्रम
उदकुपेतं फलमूलशोभितं ॥
वृक्षाग्रयाणां बहवो सुपुष्पिता
साला पियाला पनसा च तिन्दुका ।
शोभांजना लोध्र . . . . . पाटला
सुपुष्पगन्धा सुचिमिन्दका च ॥
कुवला तमाला बहवो सुवेशनं
अश्वत्थन्यग्रोध तथैवुदुम्बरा ।
तिलका कदम्बा च तथैव चम्पका
प्रसातिका श्यामक तत्र तण्डुला ॥

1. C °kheshi tuhya° B °kāça āgatā° C °gatāḥ na° BC °na tvam̃ çakno° C °kuoti ma° ṣhi° BC °tum̃ kāva°. — 3. BC °strīya vidya° B °dya vidyati | jā° C °lakshaṇe ta tvam̃ ajācanti°. — 5. B te tvam̃ ayācam̃ti prasvam mahyam̃ su° C tatvam̃ ajācanti prasava mahyam̃ su° BC °mi te tvam e°.

7. B tvam eva° C tvam aham̃° BC °vekshya āçramam̃ tvam e°. — 9. BC tvam eva° BC °tvā amṛito pi na°.

11. C tam āçra° B °ghuṭam̃ ru° rehi sā°. — 13. C sa su° B sā suchārī° BC °pravishṭa āçramam̃ | udakenupa° bhitam̃ vṛi°. — 15. C °kshāgramānām̃ ca ba° B °kshāgrāṇām̃ ca ba° BC °shpitām̃ | sā° C °alrā piyaçā pana° BC °ndukā sobhañja°.

17. C °janodhramṛiduyashṭhipāṭalā su° B °dhramaka pāṭalā || su° BC °supaṇya° cilim̃dakena kovilā ta(C °vā ta)malā ba°. — 19. B kovilā tamalā ba° C kovā tamalā ba° B °suveçanam || açva° C °çanan açva° grodhra tathai° BC °thavādumbaro tila°.

21. C tilako kaṇādāya tathai° B °kadapyāya tathai° cupakā | prasādita syāmaka°.

तत्रापिनद्धमावृतो कुशालयो
सुपुष्पगन्धो ऋषिणोपसेवितो ।
आशीतकुर्वी हरते नियच्छो
निषीद कल्याणसुखेन आसने ॥
तस्मेतवाये कुपिताय कौशिकः
अयेत्समानये अटायन्तं धनेन ।
नेहि याचेहि सुधां स्वयं ददे
सा अध्यभाषि त्वरिता महामुनिं ॥
तं संप्रति गृह्याय प्रीतमानसा
इत्यब्रवी आत्तमना जटाधरं ।
कृता त्वया कौशिक मह्य पूजा
गच्छामि दानि त्रिदशान सेवितुं ॥
सा कौशिकेनानुमता द्युतीमता
जिगीषमाणा त्रिदशां उपागमि ।
गत्वान सा आवच महत्सदर्शने
इयं सुधा वासव यो हि मे जयो ॥
सो तत्र यो प्रेषित एव मातलि
परिवृत्तो देवसभाय अयतो ।
हिरी सुधां केनमिलब्धे हेतुना
इत्यब्रवी त्वं पुनरेवमाहुय ॥
तं सो वताराद्विनिवर्तयेद्रथं

1. BC tatrâpinadha° C °mpakâḥ prâsâdita syâmoka ta° C °ṇḍulo ta° B °ṇḍulâ ta° B °kusâmayo° C °noyasevi° BC °sevino | . — 3. B °kurvi ha° B °sharṇyo mahida° C °sharuṇo ni° BC °âsanaṁ | . — 5. C °vâyesha pa câ ° çâko jaya temâna°.

7. C nehi yautrehi su° B °yaṁ dayo (?) || so a° C °dadeyaṁ | sâ adhvabhâ° BC °tvaritâṁ ma°. — 9. BC °gṛihya pri° B °mânaso i° C mânasya ity abravit | âtta° BC °dharaṁ kṛi°.

11. BC kṛitvâ tvayâ° C °gachâmi dadâmiti | tridaçâyaṁ jayaṁ sevi so kau° B °dâni ti tridaçâjaṁ yasevi || . — 13. B °kauçikinânu° C so kauçikino numa° BC °dyutimatâ(C °to) jayeshamâ° C °mânâs tridaçâm upâ°. — 15. C °na sâvaca ° vâsamayehi° B °vâsa ca yehi° BC °jaye | .

17. BC °tra preshitam eva mâtaliṁ pari° C °vṛito de° B °tto | devasabhâya° C °ya amrato hi° B °grato hiri°. — 19. BC °kenâtila° C °labdha he° BC °hvayaṁ || .

21. C taṁ ca so vadânâd vini° B °so vadanâd vini ° thaṁ | jâ ° daṁ samanta° BC °yasaṁnibhaṁ pra°.

जाम्बूनदं सन्तपनीयसन्निभं ।
प्रज्वाल्यमानं रविकरसंनिभं
अलंकृतं सुवर्णविम्बविचित्रं ॥
गताच हस्तिकपिञ्चाप्रदीपितो
भृगा च वैडूर्यमया उपागता ।
तं पुष्कला ज्योतीरसमया शुभा
मणिवैडूर्यमया च ईदृशा ॥
हेट्ठा मनेसी उपरिं च कुप्परं
सुवर्णचन्द्रा च रथे उपागता ।
तं यानश्रेष्ठं अभिरुह्य मातलि
दश दिशायो अभिनन्दयेत् मही ॥
नगांश्च शैलांश्च वनस्पती च
ससागरां कम्पमानां वसुन्धरां ।
सो क्षिप्रमेव त्वरितं उपागमि
तमाश्रमं यत्र अभूषि कौशिको ॥
सो मातलि . . . . . . . . .
दूतो अहं पृच्छति ते पुरंदरो ।
श्रिरीय श्रद्धाय च आशायापि च
हिरी श्रेया केन गुणेन मन्यसि ॥
. . . . . . . . . . . . . .
. . . श्रिरी मे प्रतिभाति मातलि ।
श्रद्धा अनित्या पुन देवसारथि

2. B °ravikâra° C °ravikâçasannibhaṁ° B °rṇṇavicitramaṇḍalaṁ | . — 4. C °hastikapiṅghra° BC °mṛigâta vai° C °gatâṁ | B °gatâ taṁ pu°.

6. BC °shkarâ jyotirasamayâ subhâ ma° C °shkarâ jyotirasâmayâ çubhâḥ ma° BC °maṇiravaiḍû °ṣâ iva (C °tvam) îdṛiçâ he°. — 8. B °manesi u° C °pariṁ ca° B °kuparaṁ° BC °raṁ suvarṇṇacandrâvarathe° C °gatâḥ | . — 10. BC °çreshṭam abhi° C °bhirûhya mâtari da° udaye mahiṁ || .

12. B °çatiṁ saså° BC °garâṁ prathamâni ca va° C °vasuṁdharâṁ so° B °ndharâṁ so°. — 14. B °tvaritaṁ âçramaṁ° C °yatha abhû° çikaḥ | B °çiko so°.

16. BC so mâtali(C °ri) dûto° B °dûto haṁ pri° C °ahaṁ ca pṛi° BC °purandaro çi°. — 18. C °rîya çuddhâ° BC °ddhâya âçâ° C °çâyam api ca° BC hiriçrîyâṅge(C °yâṅge) ma gu° C °guṇa ca manyasa | .

21. C çirî me °mâtari çra° B °tali çra°. — 22. C °ddhâ atityâ yana deva° B °punar deva° BC °shrathiḥ âdâṁ visaṁ° B °vâdidikasayantâṁ mama hirî° C °vâdidiçâṁ samantâ mama hirî°.

आशा विसंवादिकसंयता मम ॥
हिरी मनापा परिशुद्धकेवला
संग्रामशीर्षे न रता प्रव्रजिता ।
विपश्यमाना सुर[119ᵃ]भी उपद्रुता
हिरिर्निवारेति स्वचित्तमात्मनो ॥
हिरीह श्रेष्ठा मनुजेषु मातलि
दहरे कांक्षति महर्द्धिके च ।
प्रियं च भ्रातृत्वं करोति चण्ड
हिरिर्निवारेति स्वचित्तमात्मनो ॥
को ते इमां कौशिक दृष्टम् . . . .
उग्रो हि इन्द्रो मघवा सहांपति ।
इन्द्रो तव इन्द्रसगोत्र कांक्षति
तस्यैव भावसहव्रतानुज्ञ ॥
स कौशिकः तं जहियान उञ्छयं
शीलोपपेतो धमधुर्यभूतो ।
पुण्यानि कृत्वा विपुलानि आश्रमे
कायस्य भेदात्स्वर्गेषु मोदति ॥

स्यात्खलु पुनः भिक्षवो युष्माकमेवं अन्यो सो तेन कालेन तेन समयेन नारदो नाम ऋषि अभूषि कौशिकसगोत्रो । न खल्वेतदेवं द्रष्टव्यं । तत्कस्य हेतोः । अहं

2. BC *manâpaṁ pa* BC *kevalaṁ saṁ* C *çirshyeṣu rato pravrajitâḥ vi* B *çirsheṣu rato pravrajitâ | . — 4. BC vipaçyamâ* B *rabhi u* C *rabhir upodrutâḥ hiri nivâre* B *hirir nirvâre* *tmane hiri* C *tmano ko te imaṁ kauçika dṛishṭam ugrâhi indro athavâ sahâmyati indro tava indrasagotrikâ hirir nivâreti svacittam âtmane hiriha çreshṭâ*.

6. C hiriha* BC *çreshṭâ ma* C *mâtari dahareti kâṁ* B *mâtaliḥ da* BC *kâṁkshati ma* C *maharddhikâya pri* B *ilikâya pri*. — 8. BC priya bhrâtari striya(C *yaṁ) karoti chaṇḍaṁ parushâ hi(C *di) durgatâ hi nivâ* B *ttam âtmanaḥ || . — 10. BC *kauçikaḥ dṛi* C *dṛishṭvam ugro hi* B *ugrâ hi * thavâ mahâṁyati indro* C *sahâpati indro * sagotri kâṁkshati | tasyaiva*.

12. C indro tavendro sagotri kâṁ* B *sagotri kâṁ* BC *bhâvâsahavratânuksha sa* (C *anja ça)*. — 14. B *taṁ kâhiyaçam u* C *taṁ jâhiyanam uchayaṁ | çi* B *yaṁ | çilâpa* BC *bhûto puṇyâ* B *petaṁ asadhṛijjabhâ* C *petaṁ asadhûrjjabhâ*.

16. BC *çramo | kâ* C *rgeshu vadati syâ*. — 18. C *puna bhikshavaḥ yu * m eva sa syâd anyaḥ sa tena* B *m evam anya sa tena* C *abhûmi kauçikago* BC *tro na*. — 19¹. C *khalvevaṁ drashṭaṁ | . — 19². C *hetor ahaṁ* B *toḥ ahaṁ*. — 19². C ahaṁ sa bhikshavo tena kâ * yena nâlado nâma * C *çikasagotro | .

सो भिक्षवस्तेन कालेन तेन समयेन नारदो नाम ऋषिरभूषि कौशिकगोत्रो ॥ स्यात्खलु पुनर्भिक्षवो एवमस्या अन्या सा तेन कालेन तेन समयेन शक्रस्य देवानामिन्द्रस्य हिरी नाम धीता आसि । न खल्वेतदेवं द्रष्टव्यं । तत्कस्य हेतोर्भिक्षवो । एषा एव यशोधरा तेन कालेन तेन समयेन शक्रस्य देवानामिन्द्रस्य हिरी नाम धीता अभूषि । तदापि एषा मम ह्रीयायन्ती अहीना । एतरहिं पि मम एषा ह्रीयायन्ती अहीना ॥

समाप्तं मंजरीजातकं ॥

भिक्षू भगवन्तमाहंसु: । कथं भगवं यशोधरा न शक्यति तोषयितुं ॥ भगवता कुमारभूतेन कन्यानामलंकारां पि विश्राणयन्तेन यशोधरायै शतसहस्रमूल्यं हारं दिन्नं । सा च आह । एत्तकमात्रं अर्हामि ॥ कुमारेण भूयो शतसहस्रमूल्यं अंगुलीयकं दिन्नं तथापि न सन्तुष्यति ॥ कथं यशोधरा अतृप्ता न शक्यति राधयितुं ॥ भगवानाह ॥ एषा भिक्षवो यशोधरा न इदानीमेव अतृप्ता अन्यदापि एषा अतृप्ता ॥

भूतपूर्वं भिक्षवो अतीतमध्वाने नगरे वाराणसी काशिजनपदे राजा सुप्रभो नाम राज्यं कारयेसि । तस्य कुमारो सुतेजो नाम कृतपुण्यो महेशाख्यो निवातो सुखसंस्पर्शो पूर्वाभाषी प्रियभाषी अमात्यानां भट्टबलाग्रस्य श्रेष्ठिस्य नैगमस्यानां सर्वस्य इष्टो बहुमतश्च ॥ राज्ञो उत्पन्नो । इमो सर्वजनकायो कुमारस्य गुणगृहीतो कदाचिदेते मम जीविताद्व्यपरोपयित्वा कुमारं राज्ये प्रतिष्ठापयेन्सु: । तेन रा[119b]ज्ञा सो कुमारो विप्रवासितो ॥ सो दानि कुमारो भार्याय सार्धं अनु-

2. C °kshavaḥ evam asyâd anyâ° C °ndrasya hiri nâ°. — 3¹. C °d evaṁ tad drashṭa° BC °vyaṁ tat ka°. — 3². BC °kshavo e°. — 4. BC eshâm eva(C °vaṁ) yaço° C °ndrasye hiri°. — 5¹. C °ma hriyayâyanti° B °yantî alli°. — 5². BC etahiṁ pi° C °eshâṁ hriyâyanti alli° B °shâ hriyâyantî allinâ ‖.

7. C iti çrîmahâvastuavadâne mañjalijâtakaṁ samâptaṁ ‖. — 8¹. C bhikshu bha° B bhikshûr bhaga° C °hatsuḥ ‖ B °nsuḥ ka°. — 8². C °gavan yaço°. — 8³. C °tena kanyânâ° B °nâma tvaṁ kâli pi vi° C °kârâṇi viçrâṇamante° dharâya çata°. — 10¹. C ettakâmâtraṁ arhâpi ku° B °rhâmi ku°. — 10². B °dinna tathâ° C °na saṁtushyati ‖.

11. B °kyati rodhayituṁ ‖ C °kyati bodhayituṁ ‖. — 12². B esho bhi° C esho hi bhi° BC °dharâ idânîṁ(C °ni) atṛptâ a(C ° ‖ a)nya° C °pi ca eshâ° B °esho a°. — 14. C °evaṁ hi bhi° °tîtem a° BC °vârâṇasî kâ° C kârayati ‖. — 15. C °sujâto nâma° C °vâto mokhasaṁ° BC °bhâshiṇo amâ° B °bhaṭavalâ° C °ṭṭavalâgrâsya çre° BC °ishṭo ‖ ha° taçca râ°.

17¹. BC °nno i°. — 17². C °mârasya sarvaguṇa° BC °d vyavaropa° payetsuḥ ‖. — 18. C °râjño an°. — 19. B °rddhaṁ ‖ anu° C °anyatasmiṁ° C °tṛṇakuṭṭi ca parṇakuṭṭiṁ kṛi° B °vasati ‖ mâ° C °kena pâyanto su° °rahamâṇâni° B °paribhuñjanto ‖.

हिमवन्ते अन्यतरस्मिं वनखण्डे तृणकुटिं च पर्णकुटिं च कृत्वा प्रतिवसति मूलपत्रफलोदकेन यापेन्तो मृगोपपन्नानि च मृगवराहमांस्तानि परिभुंजन्तो ॥ तस्य दानि आश्रमातो [निर्गतस्य] मार्जारेण वठरां गोधां मारेत्वा तस्य भार्याये अग्रतो निक्षिपित्वा गतं ॥ सा तां गोधां पाणिनापि च न स्पृशति ॥ कुमारो मूलपत्रफलानि आदाय आश्रमं गतो पश्यति च आश्रमे तां गोधां रौद्रां वठरां । सो तां राजधीतां पृच्छति कुतो इमा गोधा ॥ सा आह ॥ एषा मार्जारेण आनीता ॥ कुमारो आह ॥ किं दानि एषा गोधा सिद्धा ॥ सा नं आह । गोमयो ति कृत्वा न सिद्धा ॥ कुमारो आह ॥ न एषा गोधा अभक्ष्या भक्ष्या एषा मनुष्याणां ॥ सा दानि गोधा तेन कुमारेण निश्चर्विकृत्वा पक्वा । पचित्वा द्रुमशाखायामोलम्बिता ॥ सा चास्य भार्या घटमादाय उदकहारिं गता । गच्छामि अहं उदकमाहरिष्यामि । ततः आहारं करिष्यामि ॥

ताये तां गोधां पक्वां समानां दृष्ट्वा वर्णसंपन्नां च गन्धसंपन्नां च अनूहां च प्रत्ययां च अभिलापमुत्पन्नं । कुमारस्यापि ताये भार्याये एतदभूषि । एषा राजधीता इमां गोधां असिद्धां हस्तेनापि न इच्छति स्पृशयितुं । यत्र च वेलां पक्वा ततः अभिनन्दति भोक्तुं । यदि एताय मम मूले प्रेमा भवे तदेषा गोधा मया फलहारगतेन सिद्धा भवेया । नास्या अतो गोधाये किंचित्संविभजिष्यं गोधां परिभुंजिष्यामि ॥ तेन सा गोधा ताये राजधीतरे उदकहारिं गताये खादिता राजधीता च उदकघटमादाय आगता ॥ सा दानि कुमारस्याह ॥ आर्यपुत्र कहिं सा गोधा ॥ कुमार आह ॥ पलायिता ॥ सा चिन्तेति । कथं पक्वा गोधा वृक्षशा-

3. BC °mâto mârjjâ° C °roṇa jaṭharâ go° B °vaṭhara go° BC °godhâ mâre ° kshipetvâ gataḥ(C °to) ‖ . — 4¹. C °nâpi na spṛi°. — 4². C °gatâ paçyati ca âçrame ta go° BC °draṁ jaṭharâṁ | . — 5. BC °imâṁ godhâ ‖ .

6¹. C sâ âha ‖ kiṁ dâni°. — 6². B eshâṁ sâ°. — 7¹. BC °dâni teshâṁ go° B °godhâṁ siddhâ sâ naṁ°. — 7². C sâ taṁ âha ‖ . — 7³. BC gometi kṛi° C °siddhâḥ ‖ . — 8². C °esho godhâ abha ° kshyâ na mânushâṇâṁ | . — 9¹. BC °pa niccharvi(C °vi)kṛitvâ° C °paktâ paci° B °kvâ paci°. — 9². BC °çâkhâyam olañvitâ | (C °tâḥ). — 10¹. C °gatâḥ ga°. — 10². C gachâmyahaṁ° C °shyâmaḥ | .

11. C tato âhâ°. — 12. C °paktâṁ samâ ° gandhasaṁpannâ ca rûhâṁ° B °gandhasaṁpannâṁ ca ruhâṁ° C °pratyagrâ(ou çrâ?)hâṁ ca° BC °tpannaṁ ku°. — 13². B °icchati | na spriçayituṁ | . — 14. B °pakvâṁ tataḥ° C °pakvâṁ taṁto abhi° B °bhoktuṁ yadi°. — 15. C °premnâ bhavet tad e° BC °premnâ bhaved etâṁ go° B °godhâṁ ma ° reyâ nâ°.

16. B nâsya ato° C nâsya gato godhâye kiṁ saṁ ° bhuñjishyâ | . — 17. C °go tâye râjadhitâye° C °khâdito | râ°. — 18². C °kahiṁ sâ dho ‖ . — 19¹. C °yito sâ° B °yitâ sâ°. — 19². B °çâkhâyem â° C °çâkhâyam â°.

वायामासया पलायिता ति ॥ तस्या राजधीताये एतदभूषि । नाहं कुमारस्य दृष्टा ॥ तस्या तं दौर्मनस्यं हृदयं प्रविष्टं ॥

सर्वसत्वा मरिष्यन्ति मरणान्तं हि जीवितं ।
यथाकर्मं गमिष्यन्ति पुण्यपापफलोपगा ॥
नरकं च पापकर्माणो कृतपुण्या च स्वर्गतिं ।
अपरे च मार्गं भावेत्वा निर्वास्यन्ति अनास्रवा: ॥

सो दानि राजा सुप्रभो कालधर्मेण संयुक्तो । अमात्येहि सुतेजो कुमारो वनातो आनेत्वा राज्ये वाराणसीयं अभिषिक्तो ॥ [120ᵃ] राज्ञो सुतेजस्य देवीय मूले न किंचिद्परित्यक्तं । न किंचित्तस्य राज्ये रत्नसंमतं । सर्वं देवीये उपनामेति यानि वस्त्राणि उदाराणि आभरणानि हारार्धहाराणि तानि देवीय उपनामयति न च शक्नोति आराधयितुं । ताये च नं गोधा हृदये गता ॥ तस्य राज्ञो सुतेजस्य भवति । अहं देवीये न सा किंचिद्गुणजाती यां न करोमि न सा किंचित्प्रियता यां न दर्शेमि न च शक्नोमि तोषयितुं ॥ सो तामाह ॥ देवि अहं तव न किंचिद्गुणजाती यां न करोमि न सा च प्रियता यां न दर्शेमि न च शक्नोमि तोषितुं न परिबुध्यामि किमत्र अन्तरं । वदतु देवी ॥ सा दानि देवी तं सुतेजं राजानं गाथया चाध्यभाषति ॥

अद्यापि ते तं वनस्मिं अनुबुध्यामि क्षत्रिया
यस्य ते धनुहस्तस्य सानुबद्धकलापिनो ।
ओलम्बा द्रुमशाखायां पक्का गोधा पलायिता ॥

राजा आह ॥

भमे भमन्तस्य भजे भजन्तं

1². BC °rasya na labdhā ta°. — 2. B tasya taṁ° C tasyaivaṁ daurmanasya hṛ°. — 3. B °ṣyanti paraṃdūtaṁ hi jīvitaṁ | C °ṇāntaṁ jīvitaṁ | . — 4. C °ṣyati pa° BC °lopamā | . — 5. C narakaṁ pāpa° ṇyāçca sva°.

6. C °bhāvayitvā° BC °tvā parinirvā°. — 7¹. B °yukto amā°. — 7². BC °tyehi sujāta ku°. — 9¹. BC °mutaṁ sa°. — 9². C sarva de° devīye upa° BC °upanayati°.

11². B yāye ca° C yāyor ca naṁ°. — 12. BC °jāti yaṁ na ka° C °romi mānanā kiṁcin pri° BC °yatāyaṁ na° C °çaknoti toṣa°. — 13¹. BC so tam āha || . — 13². BC devī ahaṁ° BC °jāti yaṁ na ka° B °romi | sitā ca priyatāmana darça° C °romi iti tāṁ ca priyatāmanaṁ darçe° C °paribudhyāmi kiṁ atra anantaraṁ ja° B °ntaraṁ jalpa°. — 15². B °gāthāya cādhyabhā°.

17. BC adyāpi me taṁ° B °taṁ tavasmiṁ ca budhyāmi kshatriya yasya° C °taṁ vānamiṁ ca budhyamiṁ kshatriya ya° °stasyā sānubaddhasya karāpito ola° B °ddhasya kalāpito ola°. — 19. C °dhā palāyitā || .

21. BC namenamantasya bha° B °je bhajantaṁ kṛtānukā | riyasya ka° C °nukāriyasya kāreya°.

कृतानुवादस्य करेय अर्थं ।
असंभजन्तं च न संभजेय
नानर्थकामस्य करेय अर्थं ॥
त्यजे त्यजन्तं सततं न गच्छे
अपेतभावेन न संवसेया ।
द्विजो द्रुमं क्षीणफलं विदित्वा
अन्यं परीक्षेय महां हि लोको ॥

स्यात्खलु पुनर्भिक्षवः युष्माकमेवमस्यादन्यो सो तेन कालेन तेन समयेन सुतेजो नाम राजा अभूषि । न खल्वेवं द्रष्टव्यं ॥ तत्कस्य हेतोः ॥ अहं सो तेन कालेन तेन समयेन वाराणसीयं सुतेजो नाम राजा अभूषि ॥ अन्या सा राज्ञो सुतेजस्य देवी अभूषि अग्रमहिषी । न खल्वेतदेवं द्रष्टव्यं । एषा सा भिक्षवः यशोधरा राज्ञो सुतेजस्य देवी अग्रमहिषी अभूषि । तदापि एषा अतृप्ता न शक्नोति तोषयितुं । एतरहिं पि एषा अतृप्ता न शक्नोति तोषयितुं ॥

इति श्रीगोधाजातकं समाप्तं ॥

भिक्षू भगवन्तमाहन्सुः । भगवता कुमारभूतेन उद्याने कन्यानामाभरणानि विश्राणयन्तेन यशोधराये एव बहुकं दिन्नं ॥ भगवानाह ॥ न भिक्षवो इदानीमेव मया यशोधराये बहुकं दिन्नं ॥ भिक्षू आहन्सुः ॥ अन्यदापि भगवन् ॥ भगवानाह ॥ अन्यदापि भिक्षवः ॥

भूतपूर्वं भिक्षवो अतीतमध्वाने नगरे वाराणसी काशिजनपदे राजा राज्यं कारयति [120b] कृतपुण्यो महेशाख्यो संगृहीतपरिजनो दानसंविभागशीलो महाबलो महाकोशो महावाहनो । तस्य तं राज्यं ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं चाकी-

1. C tesaṃ bhajantasya na saṃ° BC °na saṃbhajeyānānartha°. — 4. B °ntaṃ sa taṃ na ga° C °saṃvaseyā |.
6. BC dvijā dru° B °anya parīkṣe° C °anye parīkṣe° BC °loke ||. — 8. C °d anyaḥ so te° B °ṣi na° C °bhūṣi | tadāpi na khalu dra°. — 9[1]. BC °hetor ahaṃ°. — 9[2]. C °haṃ sa tena° C °vārāṇasyāṃ su°. — 10. BC °bhūṣi || agra° C °mahiṣī na° B °hiṣī na kha°.
11[1]. BC °devī agra° C °mahiṣī°. — 12. BC °toṣāyituṃ ||. — 14. C iti çrīmahāvastuavadāne godhā°. — 15[1]. BC bhikṣu bha°. — 15[2]. C °vatā rabhūte ° ne kanyānā ° çrāmantena° BC °rāye sarvaṃ bahukaṃ°.
16[1]. B °idānīṃ evam ayaṃ yaço° C °na evaṃ maye yaço°. — 17[2]. BC bhikṣu ā° C °āhatuḥ |. — 18. B °kāhavaḥ bhū°. — 19. C °çākhye samaṃgṛ° BC °vāhano tasya°.
21. C °rājyaṃ sphītaṃ° B °bhikṣaṃ ca ākī° C °ākīrṇṇajanamanuṣyaṃ ca praçāntajanamanuṣyaṃ ca praçā° B °daṇḍabhramara sami° C °akaravyavahārasampannaṃ |.

गंजनमनुष्यं च सुभिक्षजनमनुष्यं च प्रशान्तदण्डडमरं सुनिगृहीततस्करं व्यवहारसंपन्नं ॥ तस्य दानि राज्ञो पञ्चशतमन्तःपुरं । तस्य या अग्रमहिषी सा सर्वस्यान्तःपुरस्यातीव प्रासादिका च दर्शनीया च पण्डिता च विधिज्ञा च सर्वकलासमन्वागता च ॥ सो राजा अभीक्ष्णं अन्तःपुरस्य वस्त्राणि च आभरणानि च विचारेति । तस्यापि राज्ञो शतसहस्रमूल्यो हारो आबद्धको तस्य च हारस्य मध्ये मणिरत्नं यत्र चत्वारि महाद्वीपा दृश्यन्ति जम्बुद्वीपो पूर्वविदेहो अपरगोदानीयो उत्तरकुरुः सुमेरुश्च पर्वतराजा । अनेकशतसहस्रमूल्यं तं मणिरत्नं तस्य महाहारस्य मध्ये ॥ तां देवीं पृच्छति आभरणानि विचारेन्तो ॥ देवि अतीव त्वं मे मनं हरसि । को च उपायो येन देवी मे मनं हरति ॥ सा दानि देवी तं राजानं गाथयाध्यभाषति ।

चेष्टालीलासमाचारा निमित्तस्य च ग्राहणा ।
कौतूहलेन चपलास्त्रिभिरारभन्ति पार्थिव ॥

स्यात्खलु पुनर्भिक्षवः युष्माकमेवमस्यादन्यः स तेन कालेन तेन समयेन काशिराजा अभूषि । न खल्वेतदेवं द्रष्टव्यं । तत्कस्य हेतोः । अहं स भिक्षवस्तेन कालेन तेन समयेन काशिराजा अभूषि । अन्या सा तेन कालेन तेन समयेन काशिराजस्याग्रमहिषी । न खल्वेतदेवं द्रष्टव्यं । तत्कस्य हेतोः । एषा सा भगवती यशोधरा तेन कालेन तेन समयेन काशिराजस्याग्रमहिषी अभूषि । तदापि एतस्या मया बहुं दिन्नं ॥

इति श्रीयशोधराये हारप्रदानजातकं समाप्तं ॥

यदा बोधिसत्वो अकामकानां मातापितृणामश्रुमुखानां रुदन्मुखानां हस्तोत्

2[1]. BC °hpuraṁ tasya°. — 2[2]. C °granuahishyā sā sa ° syātīvaṁ prā° BC °avāgatā ca se rā°. — 4. C °vastrāṇi cābha°. — 5. C °mūlya āro āba° BC °sya ca hāramadhye° C °cyanti jaṁbudvī ° godāvalī utta° B °godāvarī utta° C °kuru sume ° rājo a° B °rājā ane°.
7. C °madhye rājā tāṁ° B °madhye tāṁ°. — 8[1]. BC °pricchati | ā° B °çrāṇanto de°. — 8[2]. BC devi atī° C °tvaṁ mama manaṁ°. — 9[1]. C °devi mama mana harati | . — 9[2]. B °gāthāyādhya° C °gāthayā bhā°.
11. B ceshṭhāli° BC °ca gāhanā | . — 12. B °lena ca harās tri° C °lena ca rājā strībhi° BC °bhir ārabhanti pārthi(C °pāthi)vaḥ || . — 13. B °khalvaḥ || yu° C °d anyo sa te°. — 14[1]. C °khalevaṁ dra°. — 14[2]. BC °hetor ahaṁ°. — 14[3]. C °khavo tena kā° BC °samayena kāçirājasyāgra° C °mahishi abhūshi | na kha°.
16[2]. B °bhavati yaço° C °vati yaço ° rājasya 'gramahishi°. — 17. C °bahu dinnaṁ || . — 19. C iti çrīmahāvastunavadāne yaço°. — 20. BC °kramatitrā° C °rād anagāriyaṁ pra° B °çodhara de°.

च चक्रवर्तिराज्यमपहाय अमूहं च गृहवासमपहाय अगारादनगारिकां प्रव्रजितो तदा यशोधरा देवदत्तेनोच्यते ॥ मम भ्राता प्रव्रजितो आगच्छ मम अग्रमहिषी भविष्यसि ॥ सा दानि न इच्छति बोधिसत्वमेव अभिकांक्षति । सुन्दरनन्देनापि वुच्चति । मम भ्राता प्रव्रजितो आगच्छ मम अग्रमहिषी भविष्यसि । तस्यापि न इच्छति बोधिसत्वमेवाभिकांक्षति ॥ यदा भगवां प्रवृत्तधर्मचक्रो तदाहि ए[121ᵃ]तं भिक्षुभि श्रुतं । भिक्षू भगवन्तं पृच्छन्ति । कथं भगवं यशोधरा सुन्दरनन्देन च देवदत्तेन च प्रार्थयन्ती न इच्छति भगवन्तमेव प्रार्थेति ॥ भगवानाह ॥ न भिक्षवो इदानीमेव यशोधराये सुन्दरनन्देन च देवदत्तेन च प्रार्थ्यमाना न इच्छति मम एवाभिकांक्षति । अन्यदापि एषा एतेहि प्रार्थयन्ती न इच्छति मम एवाभिकांक्षति ॥

भूतपूर्वं भिक्षवो अतीतमध्वाने हिमवन्तपादमूले सर्वेषां चतुष्पदानां समागमो अभूषि ॥ अस्माकं राजा नास्ति चतुष्पदानां राजा स्थापीयतु ॥ तहिं तेषामुत्पन्नं स्थापीयतु चतुष्पदानां राजा ति प्रवरं ॥ ते आहन्सु । को दानि चतुष्पदानां राजा स्थापीयतीति ॥ तेषां दानि उत्पन्नं । यो अस्माकमितो सप्तमं दिवसं सर्वप्रथमं हिमवन्तं पर्वतराजं गमिष्यति सो चतुष्पदानां राजा भविष्यति ॥ ते एवं समयं कृत्वा ततो प्रदेशातो येन हिमवन्तो पर्वतराजा तेन प्रधाविता ॥ तेषां सर्वेषां पृष्ठतो कृत्वा व्याघ्री हिमवन्तं पर्वतराजानं अनुप्राप्ता ॥ व्याघ्री हिमवन्तं पर्वतराजानं गत्वा चतुष्पदानां प्रतिपालेति ॥ चतुष्पदा च सर्वे हिमवन्तं पर्वतराजमनुप्राप्ता । तत्र च तां व्याघ्रीं पश्यन्ति प्रतिपालेन्तीं ॥ ते दानि चतुष्पदा तां

3ᵃ. BC so dâni° B °echati | bo° C °m evam abhi°. — 3ᵇ. C °nâpi ucyati B °ccati mama°. — 4ᵃ. BC °mahishi°. — 4ᵇ. C °ichati bo° m evam âkâm° B °m evâkâm°. — 5. C °gavân pravṛi° cakrah tadâhim etam bhi° B °tadâhi etam bhi° tam bhi°.

6ᵃ. B bhikshu bha° C bhikshur bhaga° echati | . — 6ᵇ. C °gavan yaço° ttena prâ° BC °rthayanti na i° C °m evam prâ°. — 8. BC °idânîm a° C °m evam yaço° ttena prâ°. — 9. B °prâyanti° C °prâpayanti na i°.

11. C °pûrva bhikshavah ati° bhûmi | . — 12ᵃ. B asmâkam râjâ nâsti catushpadânâm samâgamo abhûshi | asmâ° C °sthâpishantu ta° B °sthâpyantu tahim°. — 12ᵇ. BC °teshâm upa° C °tpannam thapiyantu tahim teshâm utpannam thapiyantu | catushpadânâm râjâ sthapishyatîti catu° B °piyanto catu° BC °râjâti pravaram te âha°. — 13ᵃ. C °âhaṃsuh ko dâ° B °nsuh ko dâ°. — 13ᵇ. C °sthâpayishyati | . — 14ᵃ. BC °nnam yo°. — 14ᵇ. B °sarve pratha° C °sarvam pratha° tarâjânam gami° BC °mishyati | so°. — 15. BC °himavantam parva° C °dhâvitâh | B °dhâvitâ teshâm°.

16. BC °pṛishṭato kṛi° jânam anuprâpto(C °ptah) vyâ°. — 17. C °tipâlayati | . — 18. C °catushpadâ° C °prâptam | . — 19ᵃ. BC °paçyati pratipâlenti te dâ°. — 19ᵇ. B °shpadânâm tâm° C °shpadâm tâm° B °shṭâ cettasamijâ° C °shṭâ cetasamijâ° B °rasamâ° ttâ°.

व्याघ्रीं दृष्ट्वा आर्तसंजाता दुर्मना । इस्त्रिया स्म पराजिता न च कहिंचित् इस्त्रियो राजा सर्वत्र पुरुषो राजा । यथा अस्माकं न अनिर्क भवेय पुरुषो च राजा भवेय ॥ तेहि सा व्याघ्री उक्ता ॥ भद्रे यं तुवं पतिमिच्छसि सो चतुष्पदानां राजा भविष्यतीति ॥ तां व्याघ्रीं वृषभो आलीनो ॥ भद्रे मम पतिं वरेहि । अहं लोके मंगलभूतो मम गोमयेन देवकुलानि उपलिप्यन्ति देवकार्याणि च क्रियन्ति ॥ सा दानि व्याघ्री आह ॥ माहं तव पतिं इच्छेय त्वं फालेहि च शकटेहि च नित्यमप-प्रजपो ॥ हस्तिनागो पि तां व्याघ्रीं उपसंक्रान्तो आह ॥ भद्रे अहं बलवांश्च संवृत्तकायो च संग्रामेहि च अपराजितो मम गृह्णाहि ॥ व्याघ्री आह ॥ न हि त्वं सिंहे नदमाने न उच्चारप्रस्रावं मुंचमानो पलायसि ॥ सिंहो पि मृगराजो आलीनो ॥ भद्रे मम पतिं [121b] वरेहि मम सर्वे मृगसंघा वसन्ति ॥ व्याघ्री आह ॥ मृगराज मूर्ध्नि पि पतिता प्रतीच्छामि ॥

चतुष्पदानां सर्वेषां महा आसि समागमो ।
आराजकमिदमस्माकं को च राजा भविष्यति ॥
हिमवन्तं पर्वतराजं यो सो प्रथमो गमिष्यति ।
इतो सप्तमे दिवसे सो यं राजा भविष्यति ॥
सिंहा व्याघ्रा मृगा चैव हस्तिनो वृषभा वृका ।
न शक्नुवन्ति अन्येतु गता प्रथमा पर्वतं ॥
प्रासादिकं दर्शनीयं हिमवन्तं नगोत्तमं ।
गत्वान व्याघ्री प्रथमं प्रविचारेति चतुष्पदां ॥
गता चतुष्पदा सर्वे व्याघ्रीं पश्यन्ति ते तहिं ।

1. C ishṭiyâya | palâyitâ na ca kahiñcid ishṭiyâ râjâ sa ° rushau sarvâ° B °rusho râjâ purusham sarvâ°. — 2. BC °alikam bhaveyo | puru°. — 3ᵃ. C °dre yau tuvam istri icha° B °tuvam samântri icchasi | so ca°. — 4ᵃ. C °vyâghrim risha° BC °llino lha°. — 4ᵇ. C °pati vara°. — 4ᵇ. C aha loke mangala° B °mangalam bhû ° uparishyanti° C °upalishyanti°. — 5. C so dâni°.

6. C °tvam pharehi ca° B °tvam phalehi° BC °bhagnam pra° B °lagno hasti°. — 7ᵃ. C °âha ca | . — 7ᵇ. B bhadre ca alam° C °balamvam ° dikhakâyo ca sam ° parâhitena° BC °gṛihṇâhi | . — 8ᵃ. C °ne na ucrâvapasacrâvam°. — 9. BC °llino lha°.

11. B °mûrddhena pati praticchâmi catu° C °mûrddhena patati praticchâmi | . — 12. C °âsi samâgato ârâ° B °game | . — 13. B °shyasi | . — 14. B °râjânam yo° C °râjânam yo sau prathamam ga° B °shyati | simha°. — 15. C °ptama diva°.

16. BC simha vyâ° B °vyâghro mṛi° BC °mṛigo vaibhati ° shabho vṛikâ na°. — 17. B na ca çaknoti anyetam ga° C na ca çaknoti | anyetad gatâ prathamam pa° B °thama parva°. — 19. C °nam pravicâheti | ca°. — 20. BC °vyâghrî pa ° him de°.

दृढा च अहिंता अभूषि इस्त्रियेष्व पराजिता ॥
न अस्ति स्त्रियो राजानो न च मो अस्तिकं भवेत् ।
यं व्याघ्री पतिमिच्छेय सो यं राजा भविष्यति ॥
मम गोमयेन कल्यानि देवकार्याणि क्रियन्ति ।
ऋषभो अवच तव मम भद्रे पतिं वरेतु ॥

व्याघ्री आह ॥

निखुल्थितं सदा किलान्तं शकटेहि लांगलेहि च ।
नो तादृशं पतिमिच्छे मनुष्ये यदि भवेल्लोके ॥

हस्तिनागो आह ॥

अहमनुपरोपितो संग्रामे अपराजितो ।
हस्तिनागो बली तव मम भद्रे पतिं वरेतु ॥

व्याघ्री आह ॥

सिंहस्मिं नदमानस्मिं तुवं भीतो पलायसि ।
छर्दमूत्रमेव सृजं नेच्छेयं तादृशं पतिं ॥

सिंहो आह ॥

अनुपूर्वसुजातस्कन्धो
सिंहो पर्वतगोचरो हनस्मि ।
मृगसंघा नमन्ति सर्वे
त्वं भद्रे मम भर्तारं वरेहि ॥

1. B dṛiṣhṭvāddhajitā abhū° C dṛiṣhṭvāsadhyajita abhūṣhi | iṣhṭiye parājitā nāsti° B °striye parājitā nāsti°. — 2. B nāsti striya rā° C nāsti striye rā° BC °na ca māñ sti°. — 3. C °vyāghrīñ pa° B °ghri patim icchcya so mañ rā° C °shyati | . — 4. C °ryāṇi kriyanti | B °kriyanti ṛisha°. — 5. B ṛishabhā a° BC °vavati tatra° B °patiñ caret || C °patiñ careta | .

7. BC °tañ sadatilān(C °lāñ)tañ çakaṭehi lāñgalehi ca no tā°. — 8. BC °patir na icche° C °echema nauni° BC °nushyañ yadi° B °I loko ha°. — 10. B °m anyacaropa° C °m anyacaro yata suñ ° rāyito ha° B °jito ha°.

11. BC °nāgo baddhi || tatra° BC °patiñ caret || . — 13. BC °yasi echa°. — 14. B echadamūritam eva srijañ naccheva tādṛi ° iñ || C chandamūtitam evañ saja naccheyañ tādṛi°.

16. C °pūrvañ sujātakaska° B °jātavaska° C °gocare sha° BC °m namāñ mṛi°. — 18. C °tramūdi sa° BC °dre bhartā mama va(B °ca)rehi ||

व्याघ्री आह ॥

सर्वाकारवरोपेतं गिरिं वा स्वयमागतं ।
एतादृशं पतिमिच्छे मूर्ध्नेनापि प्रतीच्छितं ॥

स्यात्खलु पुनर्भिक्षवो युष्माकमेवं स्यादन्यः स तेन कालेन तेन समयेन सिंहो मृगराजा अभूषि । नैतदेवं द्रष्टव्यं । तत्कस्य हेतोः । अहं सो भिक्षवो तेन कालेन तेन समयेन सिंहो मृगराजा अभूषि ॥ अन्यो सो तेन कालेन तेन समयेन ऋषभो अभूषि । न खल्वेतदेवं द्रष्टव्यं । तत्कस्य हेतोः । एष भिक्षवः सुन्दरनन्दो तेन कालेन तेन समयेन ऋषभो अभूषि ॥ स्यात्खलु पुनर्भिक्षवः युष्माकमेवमस्यादन्यः स तेन कालेन तेन समयेन हस्तिनागो अभूषि । न खल्वेतदेवं द्रष्टव्यं । तत्कस्य हेतोः । एष भिक्षवो देवदत्तो तेन कालेन तेन समयेन हस्तिनागो अभूषि ॥ स्यात्खलु पुनर्भिक्षवः युष्माकमेवमस्यादन्या सा तेन कालेन तेन समयेन व्याघ्री अभूषि । एषा सा यशोधरा ॥ तदा[122ᵃ]पि एषा एतेहि प्रार्थयन्ती न इच्छति मम एवाभिकांचति । एतरहिं पि एषा एतेहि प्रार्थियन्ती न इच्छति मम एवाभिकांचति ॥

इति श्रीयशोधराये व्याघ्रीभूताये जातकं समाप्तं ॥

बोधिसत्वस्य उद्याने कन्यानां रत्ना विश्राणयन्तस्य यशोधरा सर्वपश्चा आगता सर्वेहि अलंकारेहि विभूषितगात्रेहि ॥ [राज्ञा शुद्धोदनेन अमात्या आणत्ता । कतमाय कन्याये कुमारस्य चक्षु निपतन्ति ॥] कुमारस्य यशोधरां दृष्ट्वा ताये चक्षु निपतितं । यो कुमारस्य हारो अमूल्यको महार्हो शतसहस्रमूल्यो सो हारो कुमारेण ओमुचिय यशोधराये दिन्नो ॥ सार्धप्रहसन्ती आह ॥ इयमहं एत्तकं

2. C °girim vā sva°. — 3. BC °mūrddhnenāpi praticchitā ‖ . — 4. C °n evam asyād a ° samaye siṁho°. — 5¹ BC °shi ma°. — 5². C °hetor ahaṁ° B °toḥ ahaṁ°. — 5³. C °haṁ sa bhi°.

6. B anyā sākā tena ° bhūshi na°. — 7². C °hetor esha° B °toḥ e°. — 8. B °bhūshi na kha°. — 9². BC °hetor esha°. — 10¹. C °kalaraḥ do°. — 10². C °kalaro evam asyād anyo sā te° B °d anyaḥ sā te°.

12¹. BC °dharā tadā°. — 12². BC °eshā na prārthayanti(C °nti) na i° C °kshanti ‖ . — 15. C çrīmahāvastuavadāne yaço°.

16. C °ne kaṁnyānāṁ ratnā vicrāṇantasya° B °sarve paçcā° BC °laṁkārehi C °vicrāṇantehi BC °ntehi rā°. — 17¹. C rājño çu° B °danena amātya ā° C °mātyāṇattā | B °tā ka°. — 17². B °ten kaṁnyāye° C °cakshuṇi patanti | B °tanti ku°. — 18. B °shṭvā cakshu nipatati tāyā cakshu ni° C °shṭvā cakshuṇi patitāyā cakshu° BC °tāā yo ku°. — 19. BC °ddhakā mahā° B °mūlyaṁ so hā° B °dinno sā°. — 20¹. BC sārddhaṁ prasahanti°. — 20². B imam ahaṁ° C imaṁ aham ekatraṁ āṇaham iti ‖ B °kaṁ āṇaham iti ‖ .

अरहामीति ॥ कुमारेण महसमेन शतसहस्रमूल्या अंगुलिका अंगुलीतो ओमुंचियान दिन्ना ॥ एवं कुमारो रत्नानि कन्यानां विश्राणेत्वा राजकुलं प्रविष्टो ॥

राजा अमात्यान्पृच्छति ॥ कतमायां कन्यायां कुमारस्य चक्षु निपतितं ॥ अमात्या आहन्सु: ॥ सा महाराज महानामस्य शाक्यस्य यशोधरा नाम धीता । तत्र कुमारस्य चक्षु निपतितं ॥ राज्ञा महानामस्य प्रेषितं । यशोधरां धीतां मम पुत्रस्य देहि सर्वार्थसिद्धस्य कुमारस्य ॥ महानामो संदिशति राज्ञो शुद्धोदनस्य ॥ न शक्यामि यशोधरां कुमारस्य दातुं । यत्कारणं कुमारो अन्तःपुरे संवृद्धो न कहिंचिदागतो शिल्पे वा इष्वस्त्रे वा हस्तिस्मिं वा धनुस्तस्मिं वा राजशास्त्रेषु वा न कहिंचित्कुमारो गतिंगतः ॥ राज्ञो शुद्धोदनस्य श्रुत्वा दौर्मनस्यं जातं । एवमेतं यथा महानामो जल्पति । न मया कुमारो कहिंचि शिल्पे शेषितो अतिप्रेम्णेन ॥ सो दानिं राजा दुर्मना गृहं प्रविष्टो । कुमारेण दृष्टो पिता ॥ कुमारो पितरं पृच्छति । किं तातो दुर्मना ॥ राजा आह । भवतु पुत्र किं तवैतेन ॥ कुमारो आह ॥ न हि तात अवश्यं आचिक्षितव्यं ॥ राज्ञा कुमारं गुरुकं प्रेक्ष तेन भूयो भूयः पृच्छमानेन आचिक्षितं ॥ एवं चैवं च महानामेन शाक्येन आचिक्षितो तव अर्थेन यशोधरां याचयमानेन । तव पुत्रो अन्तःपुरसंवृद्धो न कहिंचि शेषितो शिल्पे वा इष्वस्त्रज्ञाने वा हस्तिस्मिं वा रथस्मिं [१०२b] वा धनुस्मिं वा । नाहं तस्य धीतां दवेहं ॥ कुमारो पि श्रुत्वा पितरमाह ॥ मा तातो उत्कण्ठतु । नगरजनपदे घोषणां कारापेहि कुमारो सप्तमे दिवसे दर्शनं दास्यतीति । यो तत्र

1. B °prasahantena° C °mūlyā aṅgulikā allinye omu°. — 2. BC °nāni kaṁnyā° C °viçrāmapetvā rājakuraṁ pra° B °shṭo rājā°. — 3¹. B °amātya nirgacchati ‖ C °amātyā nirgacchati | . — 3². C katamāyaṁ kanyā°. — 3³. BC amātya āha° C °hataḥ | . — 4. BC sa mahā° BC °dhitā tatra°. — 5¹. B °nipatantitaṁ | . — 5². C rājño ma° BC °shitā yaço°.

6. B °rājñā çu° C °rājño suddho° BC °nasya na ça°. — 7¹. BC °çakyāmi ya°. — 7². C °ṇaṁ kuro a° BC °ḥpuraṁ samṛiddho° B °gato silpe° B °dhanuorasmiṁ° C °dhanupi orasmiṁ° B °t kumārasya gatiṁgataḥ rā° C °ro gatiṁgato | . — 9¹. C rājā çu° B °rmanasya jātaṁ evaṁ e° C °jātaṁ yathā°. — 10. C °kahiṁvi çilpaṁ çishito° B °çilpaṁ çeshito | atipremanā so dā°.

11². C °dṛishṭro pitā ku° BC °pitā kumā°. — 11³. B °raṁ pṛipṛicchati | . — 12². C bhagavanta katra kiṁ tavetena ‖ B bhavanta putra°. — 13¹. B °çyaṁ ācakshi°. — 13². BC rājño kumāra(C °re)smiṁ guruko pre(B °pra)shya tena°. — 14. B °ācikshipto | tava° B °yāciyamānena tava°. — 15. C °antaḥpure samṛiddho° B °pura samṛiddho° C °dhanushesmiṁ vā° B °nusmiṁ vā nāhaṁ°.

16. BC °dhitā da°. — 17¹. B °utkaṇṭhātu | . — 17². BC °ghoshaṇā kā° C °divase da° dāsyāmiti yo°. — 18. B °kshito | so ā° C °stenjñāne vā ya° B °balāhu(?)kke vā ha° C °balāhu(?)kke vā ha° B °dhanusmiṁ vā duparitarkeshu vā | C °paritarke vā | A °paritākeshu vā | .

शिक्षितो सो आगच्छतु यदि शिल्पज्ञाने यदि इष्वस्त्रज्ञाने युद्धे वा नियुद्धे वा छेद्ये वा भेद्ये वा जवे वा बलाजवे वा हस्तिस्मिं वा अश्वस्मिं वा रथस्मिं वा धनुस्मिं वा त्सरुस्मिं वा उपनिवर्तनेषु वा ॥ राजा शुद्धोदनो श्रुत्वा प्रीतो संवृत्तो ॥ तेन नगरे कपिलवस्तुस्मिं जनपदे घोषणा कारापिता यथा कुमारो सप्तमं दिवसं दर्शनं दास्यतीति । यो तत्र शिक्षितो सो आगच्छतु यदि शिल्पज्ञाने यदि इष्वस्त्रज्ञाने ॥ अन्येहि पि अधिष्ठानेहि दूता प्रेषिता । शुद्धोदनस्य सर्वार्थसिद्धो कुमारो सप्तमं दिवसं दर्शनं दास्यति । यो तत्र शिक्षितो सो आगच्छतु ॥

तहिं कपिलवस्तुतो जनकायो निर्धावति जनपदेष्वपि जनो आगच्छति । अन्येहि पि अधिष्ठानेहि कौतूहलजातः आगच्छति । शाक्यकुमाराणां विनयं पश्यामः बलपराक्रमं च कुमारस्य सर्वार्थसिद्धस्य पश्यामः ॥ तहिं अनेकायो जनसहस्रियो समागतायो कुमारा कपिलवस्तुतो निर्धावन्ति च ॥ अपरो पि भ्रान्तो हस्तिनागो बहिर्नगरातो कपिलवस्तुं प्रविशति षष्टिहायनो परमेण स्थामेन च समन्वागतो । देवदत्तो च कपिलवस्तुतो तं दर्शनस्थानं निर्धावति हस्तिस्कन्धवरगतो । तस्य सो हस्तिनागः भ्रान्तो अभिमुखो आपतितो । तेन कुपितेन देवदत्तेन सो हस्तिनागो षष्टिहायनो तलप्रहाराय एकाहतं कृत्वा तत्रैव नगरद्वारे निहतो । सो तं हस्तिनागं हत्वा निर्धावितो तं द्वारं ॥ तत्र महाजनकायस्य संपिण्डा सुन्दरनन्दो च कुमारो अनुप्राप्तो ॥ सो पृच्छति भो भणे किमेदं नगरद्वारे जनसंपिण्डा ॥ जनो आह ॥ देवदत्तेन निर्धावन्तेन एषो हस्तिनागो एकाये त-

3². C °kapilasmiṁ ja° B °ghoṣaṇā kārāpitā yehi ka° C °pitā | yo ku°. — 5. BC °cchatu | yadi çi° C °çilpajñāne yadi çilpajñāne yadi i°.

6¹. C anyehiṁ pi adhiṣṭhānehi dū° B °ṣṭhāne dūtā preṣitā ça°. — 6². C °nasya putra sarvā °syati | . — 7. C °chatu yo vā darçanakāmo āgachatu | . — 8¹. BC intercalent le passage suivant : tahiṁ anekajanasahasriyo sannipatitāyo(B °tā | yo) kapilavastusmiṁ śaṁbhāniyo ca tatra kumāro darçanaṁ dāsyati | ete daça kroçāṁ tatra sapta tālāḥ sapta tālā kroçāntareṣu nikhata (C °nikharṣuṁ) saptamāṁ tā(C °sā)lānāṁ parato bherī ucchritā (C °bhericcāṁ ucchitāḥ) (cf. p. suiv. l. 20) BC °vastuno janakā° C °pade cāpi jano°. — 8². BC anyehi pi adhiṣṭhānehi kautūhalena jā° C °jātā āga°. — 9. BC °vinayaṁ paçyā(C °çyāmaḥ bala(B °ḥ | varaṁ)parā °siddhasya parākramaṁ paçyā°. — 10. C °nekayojanasaha° B °hasriyo sa° C °gato kumā° BC °vastuno ni° B °nidhāvati ca | .

11. C °nto ca hastināgo vahir na° B °lavastu praviçati | sha° BC °ṣaṣṭihāyano para° C °parameṇa ca sama° B °nvāgato de°. — 13. BC °vastuno taṁ da° °nidhāvati | ha° C °nidhavarato B °gato tasya°. — 14¹. C tasya ca so hastināgo bhrā° BC °āpatito | . — 14². C °prahārāye ekāhato kṛ° B °ekāhatye kṛ° C °tatreva na° BC °dvārehi hato so taṁ°.

16². BC °dvāraṁ tatra°. — 16². C °saṁpiṇḍa(?) su° prāpto pṛ° B °prāpto so pṛ°. — 17. BC °cchati ho bhaṇe ki(B kiṁ)ayedaṁ° C °piṇḍāya jatā ā° B °ṇḍā ja°. — 18¹. C jatā āha | . — 18². C °hārāye mahatā te° B °hato tena°.

तलप्रहाराये हतो । तेन हस्तिनागेन एवं नगर[193ᵃ]द्वारमोत्थटं न च तं देवदत्तो शक्नोति अतः नगरद्वारतो अपकर्षयितुं लंघयित्वा अतिक्रान्तो ॥ सो दानि हस्तिनागो सुन्दरनन्देन यानातो अवतरित्वा ततो द्वारतो सप्त पदां कड्ढितो । दृष्ट्वा महाजनकायेन हक्कारो मुक्तो । अहो कुमारस्य सुन्दरनन्दस्य उत्साहो ॥ सुन्दरनन्दो पि तं हस्तिनागं द्वारतो सप्त पदानि अपकर्षयित्वा अतिक्रान्तो ॥ बोधिसत्वो महता समृद्धीये अनुप्राप्तः ॥ बोधिसत्वो पृच्छति । किंस्य एष नगरद्वारे महां जनकायसमागमो ॥ ते आहंसु ॥ कुमार देवदत्तो च कपिलवस्तुतो निर्धावति श्वानो च हस्तिनागो प्रविशति नगरद्वारं अभिमुखो देवदत्तस्य आपतितो । तेन दर्पितेन सो हस्तिनागो एकाय तलप्रहाराये निहतो सो एषो हस्तिनागो नगरद्वारं ओस्तम्भित्वा पतितो च । देवदत्तो न शक्नोति अतः नगरद्वारातो अपकर्षितुं लंघित्वा अतिक्रान्तो । सुन्दरनन्देन सप्त पदानि कड्ढितो । तदेष जनकायो संपिण्डाये कथं पि निर्धावति ॥ तेन कालेन तेन समयेन कपिलवस्तु सप्तहि प्राकारेहि परिक्षिप्तो अभूषि । बोधिसत्वेन यानातो अवतरित्वा मातापितृकेन बलेन तं हस्तिनागं अतो नगरातो तेषां सप्तानां प्राकाराणां परतरेण क्षिप्तो ॥ तं बोधिसत्वस्य उत्साहं दृष्ट्वा अनेकेहि देवमनुष्यसहस्रेहि हक्कारा मुक्ताः बोधिसत्वो पि निर्धावितो ॥ राजापि शुद्धोदनो शाक्यगणपरिवृतो महानामो पि शाक्यो निर्धावितो ॥

तहिं कुमारेण सर्वार्थसिद्धेन दर्शनो दिन्नः सर्वशिल्पकर्मायतनानि कुमारेण संदर्शिता । सिद्धार्थकुमारस्य न कोचित्समसमो तथा युद्धे वा नियुद्धे वा न कोचित्कुमारस्य समसमो ॥ पश्चिमे निदर्शने वाणा विध्यन्ति ॥ एते दश कोशा तत्र सप्त तालाः । सप्त ताला कोशान्तरेण निखाता सप्तानां तालानां पुरतो भेरी ओ-

1. B °çaknoti ataḥ° C °tvā atyabhikrānto |. — 2. C °ritvā tataḥ dvārāto sa° dāṁ kaḍḍito B °dāṁ kaḍḍito dṛ°. — 4¹. BC °janakāye hakkā° B °muktāra aho° C °muktaḥ aho°. — 4². BC °tsāho sunda°. — 5¹. C °sapta padāni° B °dāni apakarshi° C °tvā atyabhikrānto |. — 5². C °samṛddhiye anuprāpto ||.

6². B kiṁeṣa n° C °janakāyo samā°. — 7¹. C °āhaṁsuḥ |. — 7². C kumāro deva° BC °vastuno nirddhā° B °nāgo ca pravi° BC °dvāre abhi° B °ṣa āyatito tena°. — 9. BC °shitena taṁ hastināgam ekā° C °stināgo nāga° C °ostambhitvā° BC °tito ca de°. — 10. BC °çaknoti | ataḥ° C °laṁghayitvā atyabhikrānto | B °krānto sunda°.

11¹. B °nandattena sapta° C °nandas tena sapta° BC °ni kaḍḍito tad e°. — 11². C °abhi jampadāni janakā° B °kāye sapiṇḍā° BC °kathaṁ vi ni°. — 13. C °yānāto otari° C °paratalena kshipto ||. — 15. C bodhi° °rā muktaḥ bo° BC °vito rājā°.

16. B °ciṣpā mahā°. — 18. C °dinno | sarva° B °rpā ś°. — 19. BC °sya na kvacit sa° C °niyuddhe° BC °ddhe vā na kvacit ku° samo pa°. — 20¹. C pachime nidarçanaṁ vāṇā° BC °dhyanti | tatra° (p. xxiv. l. 1).

क्रिता ॥ तत्र कोचित् एकतालस्कन्धं निस्फाडेति कोचि द्वे तालस्कन्धान्निस्फाडेति । देवदत्तस्य शरो द्वे तालस्कन्धा निस्फाडित्वा तृतीये तालस्कन्धे लग्नो । सुन्दरनन्दस्य शरो चत्वारि तालस्कन्धां निस्फाडेत्वा चतुर्थस्य तालस्कन्धस्य अन्तरभूम्यां निपतितो ॥ बोधिसत्वेन देवकुलातो पितामहस्य सिंहहनुस्य राज्ञो धनुस्तत्र आनापितं ॥ सो धनु तत्र रंगमध्ये निक्षिप्तो । यो शक्नोति एतं धनु पूरयितुं धारेतु ॥ [193b] तं धनु हस्तातो अन्यायेन विज्ञासितो न च शक्नोति कोचित्पूरयितुं । शाक्यकुमारेहि पि सर्वेहि विज्ञासितं न कोचिच्छक्नोति पूरयितुं । कोलियकुमारेहि पि विज्ञासितं लिच्छविकुमारेहि पि विज्ञासितं अन्येहि पि कुमारेहि विज्ञासितं न कोचि शक्नोति पूरयितुं ॥ पश्चाद्बोधिसत्वेन गृहीतं । पितामहस्य गौरवेण तं धनु बोधिसत्वेन गन्धमाल्येन पूजेत्वा पूरितं ॥ तस्य धनुस्य पूरियन्तस्य सर्वकपिलवस्तु शब्देन विज्ञापितं देवमनुष्येहि च हक्कारं मुक्तं ॥ एवं सप्ततालं बोधिसत्वेनैकशरेण निस्फाडेत्वा सापि भेरी निस्फाडिता भेरीं निस्फाडेत्वा रसातलं प्रविष्टो ॥ देवमनुष्येहि हक्कारं मुक्तं । देवतानां सहस्रेहि च अन्तरीक्षातो दिव्यं कुसुमवर्षं ओसृष्टं ॥ कुमारस्य बलपराक्रमं बुद्धिबलं च दृष्ट्वा सर्वत्र गतिंगतो बलेन च ऋद्धीयेन च ज्ञानेन च सर्वशाक्यराष्ट्रं तथान्ये पि राजानो प्रीता संवृत्ताः । सुलब्धा लाभा शाक्यानां राज्ञो च शुद्धोदनस्य यस्य अयमेवृशो महापुरुषो उत्पन्नो ॥

यदा बोधिसत्वो अभिनिष्क्रान्तो अनुत्तरां सम्यक्संबोधिमभिसंबुद्धो प्रवृत्तप्रव-

1. B tatra kvacit eka° C tatra kvacid ekatālaskandhaṁ nistādeti | deva° B °deti kvaci dve°. — 2¹. C °dve tālaskaṁdha ni° B °tvā tṛtiye tā° C °tālaskandhaṁ lagno | . — 2². C sundaranandasya° B °çaro traya laskaṁdhāṁ nistā° C °çaro tritālaskaṁ nistāḍetvā ° patitaḥ bo° B °tito badhi° — 3². C °pitāmahasiṁhahanu° BC °rājño tatra° B °ānāyitaṁ° BC °taṁ sā dha°. — 4². BC sā dhanu° C °tra laṁga nikshi° BC °pto yo ça°. — 5¹. B °knoti | evaṁ dha° C °knoti ca evaṁ dha ° taṁ dhāretuṁ taṁ dha° B °taṁ dhāretu taṁ dhanu°. — 5². C °dhanuṁ ha ° na vijñāpito na ca çaknoti pūrayituṁ kvacit | B °na vijñāsi° çaknoti kvacit pū°.

6. B °hi vijñāsi° C °hi vijñāpitaṁ na keciçça° B °na kvaciçça°. — 7. B °hi vijñāsi° C °sitaṁ lichavikumāre pi ji° B °hi pi vijñāsitaṁ ‖ a° BC °anyepihi kumārehi vi(C °jijñā-sitaṁ na keci ça(C °kecit ça)kno°. — 9¹. BC °hītaṁ pitā°. — 9². B °lyena pūretvā pa-jitaṁ tasya° C °lyena pūjayitvā pūjitaṁ | . — 10. C °pūrayantasya sa° °bdena jijñāsitaṁ de° BC °muktaṁ cai°.

11. BC caiva(C °vaṁ) saptatālo bo° C °naikaṁçareṇa nistāḍetvā sāpi bheri nistāḍitā bheri nistāḍitā | bherī nistāḍetvā rasā° B °ḍitā | bheri nistāḍetvā rasātalaṁ pravishṭo deva°. — 13. B °vyaṁ suku° C °vyaṁ kusumavarsha osṛishṭaṁ | B °shṭaṁ ku°. — 14. C taṁ kumā° B °sya sarvaçakya ° tra gatiṁgato° C °ddhiyena jñānena sarveçakya° BC °vṛittāḥ sula°. — 15. C °rājño çuddho° B °nasya | yasya a° C °ayaṁ sadṛi ° tpanno yadā° B °tpanno yadā°.

17. C °tūpravaladharmacakras tadā ‖ etaṁ°.

अथाकर्मेदृशं तव पूर्वोपकारिणमपकृत्वान जीवं नरके पतेया। सचन्द्रतारा पृथिवी पतेया नद्यो च प्रतिस्रोतं वहेन्सुः। न त्वेवं अहं मृषावादं भाषेया तव च कृतं न जानेया॥ राजा आह॥ यथा नागराजस्य इष्टं तथा भवतु। पश्यामि ते भवनं॥ राज्ञा उग्रसेनेन अमात्या आणत्ता। युज्यन्तु रथा हस्ति अश्वा विविधानि च यानानि नागराज्ञो भवनं द्रक्ष्यामः॥ वचनमात्रेण राज्ञो अमात्येहि प्रतिजागृतं॥ राजा सामात्यपरिजनो सयुग्यबलवाहनो चम्पकेन नागराज्ञा सार्धं एकयानमभिरुहित्वा महता राजानुभावेन महता राजऋद्धीये महतो जनकायस्य हक्कारहिक्कारभेरीपटहशंखशब्दसन्निनादेन वाराणसीये नगरातो निर्यात्वा येन चम्पकस्य नागराज्ञो भवनं तेन प्रयासि। यावत्तां यानानां भूमि ताव यानेहि यात्वा पद्‌चारेण चंपकस्य नागराज्ञो भवनं प्रविष्टो सपरिवारो॥ सो दानि तं चम्पकस्य नागराज्ञो भवनं पश्यति देवभवनसंनिभं पुष्पफलोपेतेहि वृक्षसहस्रेहि उपशो[164a]भितं नानाप्रकारेहि च माल्येहि उपवासितं पुष्करिणीहि च रत्नामयीहि उपशोभितं उत्पलपद्मनलिनिकुमुदपुण्डरीकसौगन्धिकसंछन्नाहि नानाविचित्रेहि च रत्नमयेहि कूटागारेहि प्रासादेहि च वैडूर्यस्तम्भेहि मुसारगल्वास्तृतकेहि॥ तत्र काशिराजा चम्पकेन नागराजेन रत्नामये पर्यंके उपविशापितः॥ तानि षोडश नागकन्यासहस्राणि चंपकं नागराजं उपक्रम्य पृच्छन्ति। कथन्ते अमित्रमध्ये वासो आसि कथं ते क्षुधापिपासा विनोदिता कथं वा ततः मोक्षो आसि॥ नागराजा आह॥ लब्धो मे यथोचितमन्नपानं एतेन च काशिराज्ञा मोचितो॥ ता दानि षोडश नागराजकन्यासहस्राणि राज्ञो उग्रसेनस्य प्रीता तुष्टा संवृत्ता मुक्तानां पंच वैडूर्यमिश्राणि वाहशतानि दिन्नानि॥ चम्पकेन नागराजेन सर्वा-

1. BC °ndratāraṃ pṛ° C °thivī gaṅgā° B °vahensuḥ | — 2. B °sheyā | tava° BC °tava cikṛitaṃ°. — 3². BC °naṃ rā°. — 4¹. BC rājño ugrasena a ° ṇattā(C °ttāḥ) yu°. — 4². BC yujyatu ra° C °dhānāni ca yā ° garāja bhava° BC °vano dra°. — 5. BC °rājñā a°.

6. B °sāmātyāpari ° hano caṃpakanāga° B °yānam abhirohitvā° C °bhirohitvā° C °ddhiyena mahatā ja ° hikkārameripaṭahaśaṃkha° BC °khasaṃninādo° C °nagarāto ni° BC °yena caṃpaka°. — 9. C yāvattā yānā° C °tāvad yānehi°. — 10. C °phalopatehi vṛi° BC °srehi upaçobhitaṃ | nānāpra° B °upayāsi° C °kārehi mālyehi ca upa° B °pushkiri° BC °bhitaṃ | utpa° C °tparmadumapuṇḍarīkanalinīsu° B °ṇḍalikasau° C °cchannāni nānāvi° B mbhehi ca musā° C °vaiḍūryehi stastehi musāgalvastṛitakehi ‖ B °stṛipatakehi ‖ .

15. C °rājā ratnā° B °taṇāpayo parya° C °çāpito | .

16¹. C tāni dāni shoḍa ° gakaññyāsahasrāṇi caṃ° BC °caṃpakanāga° B °nti katha°. — 16². C kathaṃ te a ° so āsi | kathaṃ te° B °āsi ‖ kathaṃ te° C °pāsā prativino ° kato āsi | . — 18². BC °thodakam anna° C °nena eṣa rājño bhavanaṃ paçyati° (p. xiv, l. 1) B °rājño mo°. — 19. B °çrāṇāṃ ca vāha°. — 20. B °sarvakāraṃ u ° çati | do° C °bhavanaṃ sanni° B °bhaṃ rāja°.

कारं उग्रसेनस्य राज्ञो भवनं पश्यति देवभवनसन्निभं ॥ राजकुलं परिरक्षितं अग्निदाघो च उत्पन्नो चम्पकेन नागराजेन निर्वापितः ॥

इति श्रीचम्पकस्य नागराजस्य परिकल्पपदं समाप्तं ॥

अथ

का नु विद्युद्दिवाभासि सरसि चिय तारका ।
ताम्रपादपयष्टिर्वा पुष्पिता वनमन्तरे ॥
असि त्वं नन्दने जाता जाता चित्ररथे वने ।
देवी असि वा गन्धर्वी न त्वं असि हि मानुषी ॥

नागकन्या आह ॥

नाहं देवी न गन्धर्वी न महाराज मानुषी ।
नागकन्याहं भद्रन्ते अर्थीनी इह आगता ॥

राजा आह ॥

चित्तान्तचित्ता विप्लुतेन्द्रियासि
नेत्रेहि ते वारि स्रवन्ति किन्ते ।
नष्टं हि किंची अभिप्रार्थयन्ती
इहागता तानि न दीर्घं ब्रूहि ॥

नागकन्या आह ॥

यमुग्रतेजं उरगो त्ति आहु
नागो ति मं आहु जना जनेन्द्र ।
तमग्रहे पुरुषो जीवितान्वितं
तं बन्धना मुंच पतिं मे देव ॥

1. BC °kshitam | asti° C °pito ||. — 3. C çrîmahâvastuavadâne campa ° râjâjâtakasya pari° B °râjâtasya pari° BC °lpapadâ sa°. — 4. C kâ nu vi° BC °dyur ivâ° C °bhâsa tu sara° B °si usara° BC °kâḥ nâmrapâda°.

6. B °shpitâ ca ramantare | C °shpitâ ca ramantike |. — 7. BC nandana(C °vâva)dane jâtâ jâtâ ci°. — 8. B devim asi ca ga° C devîm asi gandharvo na° BC °na te anyâni mâ° B °nushîḥ ||.

11. C °bhadram te a° B °n te arthî iha°. — 13. B cittânta° C °ndriyâ çrî netrehi te shâṇi çra° B °vârî çra°. — 15. C nashṭehi kimcâbhi° B °shṭam kiu abhi° C °rthayanti i° B °dîrghatam kruhi || C °dîrghatam bhuvih ||.

17. BC °gakamnyâ°. — 18. BC yam udagratejâ u° C °ragortti âhuḥ nâgoti nâhu janâ° B °gortti mam âhu | nâgoti na âhu janâ° BC °janendram |. — 20. BC °purusho(C °sha) jîvati jîvitânvitam(C °tam |)ba° C °me ca devâḥ na°.

नगरं पि नागो भस्मीकरेया
तथा हि यावच्च बलोपपेतो ।
धर्मं तु नागो अयं याचमानो
हस्ततलमागच्छे वनीपकस्य ॥

राजा आह ॥

कथं विजानेय गृहीतनागो
स उग्रतेजो बलस्थामवन्तो ।
दुरासदो दुःप्रसहो भुजंगो
हस्ततलमागच्छे वनीपकस्य ॥

ना[161b]गकन्या आह ॥

चतुर्दशीं पंचदशीं च अष्टमीं
चतुष्पथे गच्छति नागराजो ।
ओसृष्टकायो विचरन्तो नागो
हस्ततलमागच्छे वनीपकस्य ॥
एवं विजानेसि गृहीतनागो
सो उग्रतेजो बलस्थामप्राप्तो ।
दुरासदो दुःप्रसहो भुजंगो
हस्ततलमागच्छे वनीपकस्य ॥

राजा आह ॥

निषीद वा तिष्ठहि त्वं च नागि
गच्छाहि वा ताव स्वकं निवेशनं ।
यावन्ति दूता गतो नीयतां ति
अन्वेषिषुः नागनृपं यशस्विनं ॥

1. C °raṃ nāgo bha ° revā | tathā° B °hi yā balo°. — 3. B °nāgo arya pāpamāno° C °ccheya vanī° B °varṇāpa°.

6. B °ya mṛitanāgo nam ugra° C °ya mṛite nāgam ugratetejo balasthāmaviryyavanto | B °sthāmanto | . — 8. C durāsadā duḥ ° ra āgacchasi vanī°. — 10. C nāgakaññyā°.

11. BC °rdaçi paṃ° B °shṭamiṃ ca catu° C °shṭamiṃ caturpatho ga ° rājā | . — 13. C °shṭashṭhakāya vimaranti nāgaḥ haṃ bhaavam āgacchati vaṇipakasya | B °go haṃ tvam ā°.

17. C °rāsadā dushprasaho bhu ° gacchasi vanī°. — 20. B nisīdo vā tishṭha vā tāṃ vandni gacchi° C °shṭhati vā vanāhi gacchahi° BC °tāvat svakaṃ°.

22. B yāva mī dū° C yāvad bhūmi dūtā gatā nāya tantu sarve° B °gatā nāya taṃ tu sarve° BC °shi se nāgarājā yaça°.

नागकन्या आह ॥

धर्मेण मोचेहि असाहसेन
ग्रामेण निष्केन च गोशतेन ।
ओसृष्टकायो निगृहीतनागो
पुण्यार्थिको मुञ्चतु नागराजो ॥

राजा आह ॥

धर्मेण मोचेष्यमसाहसेन
ग्रामेण निष्केण गवां शतेन ।
ओसृष्टकायो च भुजंगो गच्छतु
प्रीतो च संपद्यतु नागराजा ॥

नागिनी आह ॥

षोडश स्त्रीसहस्राणि आमुक्तमणिकुण्डला ।
वारिवासगृहाश्रिता आर्य त्वां शरणागता ॥

राजदूतेहि अहितुण्डिको च नागराजा च आनीतो ॥ राजा उग्रसेन आह ॥

देमि निष्कशतं भव्यं स्थूला च मणिकुण्डला ।
चतुःशतं च पर्यङ्कं दामकपुष्पसन्निभं ।
भार्या च सदृशीदेवी मुञ्चतु उरगाधिपः ॥

अहितुण्डिको आह ॥

विना तु दाना वचनान्नरेन्द्र
मुञ्चामिमं धार्मिको नागराजा ।
महानुभावो परलोकदर्शी
महायशो सो च न संविहेठयो ॥

1. C nâgakaññyâ*. — 2. B *movehi* C *mokshevehi*. — 4. B osrishthakâyo * punyarthiko mucyantu nâ* C *rthiko ucyantu nâ*.

7. BC *cedhyam̃ asâ* B *grâmana ni* C *shkena ga*. — 9. B *kâyo gacchatu bhujago prito ca campo*.

11. C nâgini âha ‖. — 12. BC *srâṇi ama* C *ṇdalâḥ vâ* B *ṇdalâ vâri*. — 13. C vârîvam̃ ca grihâsritâm̃ âryya* B *rivo grihâsrito nâryo tvâm̃ çaraṇam âgatâ ‖. — 14¹. BC râjâdû* C *garâjo ca*. — 14². C *sena âha ‖. — 15. C *nishkâçatam̃*.

16. B *kam̃ damako pu* C *kam̃ damakam̃ pu*. — 17. C bhâryyâ ca sa* B *drigâm̃ de * cyatam ura*. — 19. BC *dânâ tu vacanân na(C *nâ na)rendram̃ muñcâmimâm̃ dhâ*.

21. C *pamaloka * lo ca na sam̃vihethayo | B *lo vacana sam̃vihethayo |.

यो बाधते पूर्वकरिस्य राज्ञो
[164a] अथाकृतो तुह्य कृतं न जाने ॥
अप्येव वातो गिरिमावहेय
चन्द्रो च सूर्यो च क्षिति पतेय ।
सर्वा च नद्यो प्रतिस्रोता वहेयुः
न त्वेवहं राज मृषा भणेयं ॥

राजा आह ॥

यथेहं नागराजस्य तथा भोतूरगाधिप ।
यथा तुवं च याचेसि पश्यामि ते निवेशनं ॥

राजा उग्रसेनो अमात्यानाह ॥

युज्यन्तु ते राजरथा सुचित्रा
कम्बोजका अश्ववरा सुदान्ता ।
हस्ती च युज्यन्तु सुवर्णच्छन्ना
द्रक्ष्याम्यहं नागनिवेशनानि ॥

अमात्या आहंसुः ॥

युक्ता इमे अश्वरथा सुचित्रा
कम्बोजका अश्ववरा सुदान्ता ।
हस्ती च युक्तास्ते सुवर्णच्छन्ना
निर्यातु (राजेन्द्रो) महाबलेन ॥
ततो च राजा निर्यासि सेना च चतुरंगिनी ।
मित्रामात्यपरिवृतो ज्ञातीसहपुरस्कृतो ॥

1. B yo bādhite° C yo bodhite° BC °pūrvopakāri° B °rājañ samā° C °rājan samāndriço° BC °tujya kṛ°. — 3. C apyeva kṛitañ giri sā bhaveya ca° B °giri sābhaveya ca° BC °candro sū(C °su)ryo ca° C °pateyā | . — 5. C °çrota vahetaṇḥ na tvevaṃ ahaṃ° B °hotsuḥ | na tve° BC °rājā mṛsho bhaṇeyaṃ | .

7. BC *omettent ces deux mots.* — 8. BC yathehiṭhanāga ° thā bhotū(B °bhobhū)ragādhipaḥ(C °paḥ | ) ya°. — 9. B yathā tvañ ca yā° C yathā ca tvañ yācesi nāgarājā paçyāmi ca | te° BC °te nāganiveçanāni ‖ . — 10. B °tyā āha ‖ C °tyānām āha ‖ .

11. C pūjyantu° B yujyañtu te rā° C °ratho muci°. — 13. B hastī ca yu° C hastiç ca pūjya° BC °trā(C °trā | ) drakshyāmi nāga°.

16. C yuktante açvara° B °ktā me açvara° C °jakā ashṭavaro sudānto ha° B °nā ha°. — 18. C hastiç ca yu° B °varṇṇā ccha° BC °ryātu mahā° C °balenā ta°. — 20. C tataç ca | rā° BC °senā catu ° sā mitrā°.

21. B °skṛito bha°.

नागराजा आह ॥

यथोचितं लभ्यति अन्नपानं
क्षुधापिपासाय विनोदनार्थं ।
अयं च मे . . . . . काशिराजा
क्षिप्रं नाम मोचये बन्धनातो ॥

ता दानि षोडश नागकन्यासहस्राणि उग्रसेनं काशिराजमभिष्टवेन्सुः ॥

एवं नन्दाहि भद्रन्ते काशिराज सबान्धवो ।
यथा वयम[163b]द्य नन्दाम दृष्ट्वानमुरगाधिपं ॥
एवं नन्दाहि त्वं राज सह सर्वेहि ज्ञातिहि ।
यथा वयमद्य नन्दाम समग्रा पतिना सह ॥

मुक्तान ते वाहशतानि पंच
वैडूर्यमिश्रान ददामि राज्ञे ।
अन्तःपुरे भूमि समास्तरा हि
निष्कर्दमा लिपिमति नीरराज ॥
तं तादृशं अथ स राजा दृष्ट्वा
अन्तःपुरं देवविमानकल्पं ।
नारीगणेन परिचर्यमाणो
अनुशास्ते काशिपुरं समृद्धं ॥

राजा उग्रसेन आह ॥

त्वं कंचुकाम्बरधरो सुवस्त्रो
तव चापिन्तो अनुपमवर्णो ।
दिव्येहि कामेहि समङ्गिभूतः
किमर्थं नाग भुवि त्वं चरेसि ॥

2. C °nnapāna kshu°. — 4. BC °ca me kāçi°.

6. C °ṣakanyā° B °udagrasenaṁ° BC °stavetsuḥ evaṁ°. — 7. BC evaṁ nayehi bha° C °bhadanto kā ° ndhavaḥ | B °ndhavā | . — 10. C °ndāma samāgrā°.

11. BC °rājan | . — 13. B °samasta° C °samastalā hi ni° B °nishpadaṁ mā bheshyati ni° C °mā bhavishyati ni° BC °rāja taṁ tā°. — 15. BC °çaṁ || atha sa rāja ṛiṣhṭaṁ (B °shṭhaṁ) antaḥ°.

17. C °ryamāno anu° C °samriddhaṁ || . — 20. BC °cuke paradharā suvastriyāyanti (B °nti | ) anopavarṇṇā divye°.

22. B °mehi saṁmaṅgi° C °samanvagibhūto ki° BC °martho nā° B °ga bhavanaṁ ca° C °ga bhūvanaṁ ca°.

नागराजा आह ॥

नान्यत्र भवे मानुषको जनो तु
संचिन्त्यति सो दिवसंगमो वा ।
योनिमहं मानुषीं प्रार्थयन्तो
तस्य कारणाय तपं चरामि ॥

राजा उग्रसेनो चिन्तयति ॥

दृष्टा नागा च नागी च प्रार्थयन्ता मानुषं भवं ।
किं करिष्यामि शुभं कर्मं अपायसमतिक्रमं ॥
पूर्वेनिवासं भगवां पूर्वजातिमनुस्मरन् ।
जातकमिदमाख्यासि शास्ता भिक्षूण अन्तिके ॥
ते स्कन्धा तानि धातूनि तानि आयतनानि च ।
आत्मानं च अधिकृत्य भगवानिममर्थं व्याकरे ॥
अनवराग्रस्मिं संसारे यत्र मे उषितं पुरा ।
चम्पको हं तदा आसि नागराजा महर्द्धिको ।
यशोधरा नागकन्यासि एवं धारेथ जातकं ॥
एवमिदमपरिमितं बहुदुःखं
उच्चनीचं चरितं पुराणं ।
विगतज्वरो विगतभयो अशोको
स्वजातकं भाषति भिक्षुसंघमध्ये ॥

भगवानाह ॥ तदाप्यहं भिक्षवः नागभूतो अहितुण्डिकेन बद्धो मांसार्थं यशोधराये मोचितो । अश्ववाणिजको पि सन्तो वाराणसीये संजातो मोचितो ॥

इति श्रीचम्पकनागराजस्य जातकं समाप्तं ॥

2. C °bhava mā° BC °jane tu saṃcintyata | so ° di(B °dvi)vasaṃ yamo vā yo°. — 4. BC yonimahaṃ°.

7. BC dṛṣṭvā nā° B °rthayatā manu° C °rthayatā mānuṣaṃ bhavaṃ | . — 9. BC °nivāsa bha° C °gavān pūrve jātim anu°. — 10. B °m ākhyāsi° C °khyāsi sākhā bhikṣuṇaṃ antike |.

11. BC °tāni āyatya°. — 12. C °imānam adhi° B °bhavon etam a° C °bhagavān etam artha vyā°. — 14. C °ko nāgarājā haṃ tadāpyaham āsi nā°. — 15. BC °nāgakaṃnyā°.

16. B evam imam apa° C °ramidaṃ ba° BC °rāṇaṃ vigatajva°. — 18. C °jvaraṃ vigatabhaya°. — 20². B °mahāmarthaṃ yaço° C °māsārthaṃ yaço°.

21. BC °sya saṃjāta°. — 22. C śrīmahāvastuavadāne campako nā°.

छन्दको बोधिसत्वेन अभिनिष्क्रमन्तेन अनोमियातो अधिष्ठानातो निवर्तितो । छन्दकश्च कण्ठको च कपिलवस्तु आगता ॥ राजा शुद्धोदनो श्रुत्वा छन्दको आगतो कण्ठकमादाय छत्रं च आभरणानि च राजकुलातो बाहिरद्वारशालां निर्धावितो सान्तःपुरो यशोधरापि कण्ठकं ग्रीवायामुपगृह्य प्ररोदन्ती आह ॥ कहिं ते कण्ठक कुमारो नीतो किं मया तव अपराद्धं छन्दकस्य च यं यु[163a]ष्मेहि मम सुखप्रसुप्ताये कुमारमादाय गता अहं च षष्टिसहस्रं च अन्तःपुरं भवति विधवाकृतं ॥ छन्दको आह ॥ किमस्माकं अपराधं कृतं अहं पि उच्चेन स्वरेण आरयामि । कुमारेण अभिनिष्क्रमन्तेन कण्ठकेन उच्चेन स्वरेण हीषणाशब्दं कृतं न च युष्माकं को पि विबुध्यति ॥ देवसहस्रकोटीयो अन्तरीक्षे समागता ॥ इमां मल्लभूमिं अनोमियं नाम अधिष्ठानं नीतो वसिष्ठस्य ऋषिस्य आश्रमपदस्य नातिदूरे ॥ कुमारेण लुब्धकस्य काशिकानि दत्वा काषायाणि गृहीतानि स्वयं चूडा असिपत्रेण छिन्ना सा च चूडा शक्रेण देवराजेन प्रतिच्छिता ॥ ततः मो कुमारेण आभरणानि दत्वा निवर्तितो । एवं च अहं सन्दिष्टो । पितरं मे कौशल्यं पृच्छेसि मातृस्वसाये पि सर्वस्य ज्ञातिवर्गस्य । कृतकार्यो पि परिपूर्णसंकल्पो आगमिष्यामि ॥ यशोधरा च षष्टिसहस्रं च अन्तःपुरं सर्वं च शाक्यराष्ट्रं रोदित्वा परिदेवित्वा स्वकस्वकानि निवेशनानि गता ॥

छन्दकस्य राजकुलं प्रवेशित्वा राजार्हं भक्तं अन्नपानखाद्यभोज्यं उपनामितं । कण्ठकस्यापि मधुम्रक्षितानि मोदकानि उपनामितानि तथा अन्यमपि राजार्हं खाद्यभोज्यं मोदकप्रकाराणि च कण्ठकस्य पुरतो राशीकृता न च कण्ठको परिभुंजति ।

1. C °nomijāto adhi°. — 2¹. BC °ç ca kanthako° C °lavastum āga° BC °gato ‖. — 2². B °dvālaçā ° vito çāntaḥ° C °grīveyām upagṛ° B °rodantiṃ āha ‖. — 4. C kahin te kumā° B °n te kanthaka ku ° to kiṃ me yā ta° C °parādhaṃ ccha° BC °sya cāyaṃ yā° C °sukhaṃpra ° māradāya gato ‖ ahaṃ° B °tā | ahaṃ° C °shashṭhīsaha° BC °ḥpuraṃ bhavehi vidha°.

7². C °dhaṃ kim asmākam aparādhaṃ kṛtā ahaṃ° B °āravāmi ‖. — 8. B °ntena kanthakena u° C °ccena svā° BC °reṇa hīsha°. — 9. C °riksho samāgataḥ ayaṃ malla°. — 10¹. C °vaçishṭhasya ṛi ° padāsya nāti° B °dūre kumā°. — 10². C °sya kaṇçi° BC °svayam varaṃ asi° B °treṇa cchi° C °cchinna sā°.

12. C tataḥ kumā° B tataḥ mām kumā° C °ṇāni vartito | B °datvā niva°. — 13¹. C °saṃdṛishṭo BC °dṛṣṭo pita°. — 13². C °pṛcchasi | mātuḥ svasāpi° B °si | mātṛsvasāpi sarvasya jñā°. — 14¹. B °kārye pi° C °kāryyaparipūrṇṇaṃ saṃ° BC °kalpo ā°. — 14². B °dhāro ca shashṭe ca saha° C °shashṭhī sahasraṃ cāntaḥ° BC °ḥpuraṃ sārddhaṃ ca çā° B °rāshṭaṃ ro° C °rājaṃ rodi°.

17. B °kule prave° C °rhaṃ pratītaṃ annapānaṃ khā° B °bhojya u°. — 18. B kanthakasyā° dhumakshi° BC °anyasyāpi rājārhasya khādyabhojasya mo° C °prakāprakārāṇi° C °puravo rāçiṃ kṛitvā na°.

बोधिसत्वं समनुस्मरन्तो सर्वकालमश्रूणि प्रवर्तेति । अन्तःपुरिका च अंशुकेहि दुकूलेहि पट्टोर्णेहि च महार्हेहि राजार्हेहि वस्त्रेहि कण्ठकस्य अन्ये अश्रूणि प्रमार्जेन्ति अन्ये शीर्षं प्रमार्जेन्ति अन्ये ग्रीवं प्रमार्जेन्ति अन्ये पृष्ठं प्रमार्जेन्ति अन्ये स्कन्धं प्रमार्जेन्ति अन्ये बाहुं प्रमार्जेन्ति अन्ये सन्धिं प्रमार्जेन्ति अन्ये वालधिं प्रमार्जेन्ति अन्ये पादानि परिमर्दयन्ति अन्ये मधुघटितानि आलोपानि मुखे अल्लीयन्ति अन्ये नानाप्रकाराणि खाद्यकानि अल्लीयन्ति अन्ये उक्कारिकानि अल्लीयन्ति अन्ये मोदकानि अल्लीयन्ति सुवर्णरूप्यमयेहि भाजनेहि रत्नविचित्रेहि राजारहाणि पानानि अल्लीयन्ति न च कण्ठक आहारं करोति । बोधिसत्वस्य शोकेन अनाहारो च कण्ठको कालगतो बोधिसत्वमप[163b]श्यन्तो । तस्य कालगतस्य राज्ञा शुद्धोदनेन महता राजानुभावेन शरीरपूजा कृता । समनन्तरकालगतो च त्रायस्त्रिंशेहि उपपन्नो शिखण्डिस्य देवपुत्रस्य पुत्रत्वमभ्युद्गतो कण्ठको नाम देवपुत्रो महर्द्धिको महानुभावो अन्येषां पूर्वोपपन्नानां देवसहस्राणां देवपुत्राणां दिव्येहि दशहि स्थानेहि अभिभवति । तद्यथा दिव्येनायुषा दिव्येन वर्णेन दिव्येन सुखेन दिव्येन ऐश्वर्येण दिव्येन परिवारेण दिव्येहि च रूपेहि शब्देहि गन्धेहि रसेहि दिव्येहि च स्पर्शेहि ।

यदा भगवां प्रवृत्तवरधर्मचक्रो वैशारिकशासनसंजातो तदायुष्मता महामौद्गल्यायनेन देवेषु चारिकां चरमाणेन कण्ठको देवपुत्रो दृष्टो दृष्ट्वा च पुनः गाथया अध्यभाषे ।

1[1]. B *satvo sama* C *kâlam açrû* B *lam açruṇi* C *vartâyati | . — 1[4]. B *rikâ vaḥ nâ* C *rikâ vo aṃçukehi dukulehi patroṇṇehi mahârakehi râjarhe vastre* B *patrollehi ca mahârakehi râ * strehi kanthakasya* BC *nye açruṇi pramârjenti | anye çî* B *grîve pra* C *grîvaṃ pramârjeti anye pṛishṭiṃ pramarjeti anye skandhaṃ pramârjati | anye bâ* B *prishṭe pra * ndhaṃ pramârjenti | anye bâ* B *nye baladhiṃ* BC *rdayanti | anye ma* B *dhumakahitâni laṃpâni mukhe alliyanti | anye nâ* C *kahitâni laṃpâṇi mukhe alliyanti | na ca kanthako âhâraṃ karoti | anye nânâprakârâṇi khâdyakâni alliyanti | anye ukkârakâ vi alliyanti | anye mo* B *ijakâni alliyanti | anye u * dakâni alliyanti | su* C *modakâni alliyanti | anye suvarṇṇamayâni rûpya* B *râjârahâṇi pâṇâni alliyanti | na ca*.

8. B *kena âhâ* C *hârâ ca kaṇṭha * satvo paçyanto | . — 9. C *gutasya râjño çu* B *ddhodanena ma* C *mahâtâ râjâ * pûjâṃ kritâ | . — 10. B samantarakâragato* BC *te ca trayastriṃ* C *nyopâṃ pû* BC *rvopapannâṃ deva(C *vaputro)saha* C *daçehi sthâ*.

13. C *shvarya divyehi rûpehi divyehi çabdehi divyehi gandhehi divyehi rasehi divyehi sparçehi | .

16. C yadâ ca bha * cakra vai* BC *sâriko çâsa* B *jâte | tadâ* C *jâtaṃ | tadâ âyushmato mahâ* C *punar gâthâm abhâshe | B *gâthâyâ a*.

चन्द्रो यथा पंचदशीं नक्षत्रपरिवारितो ।
ओभासेति दिशां सर्वा तारका विगता प्रभा ॥
तथोपममिदं वेश्म दिव्यं देवपुरे तव ।
प्रज्वाल्यमानो वर्णेन आदित्यो व विरोचसि ॥
मुक्तारगलमुक्ताहि मणिलोहितकाहि च ।
चित्रा सुसंस्कृता भूमि न चात्रोद्वायते रजः ॥
वैडूर्यस्य सुवर्णस्य स्फाटिकरूपियस्य च ।
कूटागारशुभाख्याना प्रासादा ते मनोरमा ॥
प्रासादानां च अविदूरे पुष्करिण्यो सुनिर्मिता ।
वैडूर्यफलकसोपाना सुवर्णवालिकसंस्तृता ॥
तासां च तीरेषु द्रुमा सुजाता
महा महान्तं विटपं समुद्गता ।
अभ्युद्गता ब्रह्मपुरं च अम्बराद्
वातेरिता सर्वदिशा प्रवान्ति ॥
तेषां च तीरेषु द्रुमा सुजाता
महा महान्तं विटपं समुद्गता ।
संपुष्पिता भान्ति दिशा चतस्रो
द्विजेहि घुष्टा रुचिरस्वरेहि ॥
संछन्ना पुण्डरीकेहि पदुमेहि उत्पलेहि च ।
नानावर्णेहि पुष्पेहि वान्ति सर्वदिशो दिशो ॥
एकमेकस्मिं तूर्यस्मिं षष्ठि नृत्यन्ति अप्सरा ।

1. BC °daçiṃ nakshu° C °kshatrâparivâro o° B °rito obhâ°. — 2. B °seti | di° C °diçâ sa° BC °vigatânabhâ tatho°. — 3. B °pamaṃ veçma° C °daṃ vaçma° BC °puraṃ tava | . — 4. BC prajvâlyamânâ varṇṇe° C °ditye ca vi° B °tyo ca vi°. — 5. C muktâgalva° kâni ca | B °kâṇi ca | .

6. C °bhûmi câtra udvayata rôjo vai° B °trodvayate râjaḥ vai°. — 7. B °ṭikâ rû° C °rûpiya ca. — 8. C kuṭâ° çubhasthomâṃ prasâdâ mano° B °sthânâṃ prasâdâto mano°. — 9. C °nâṃ câbhidû° BC °pushkiriṇyâ su° C °rmitâḥ | . — 10. C °phalakhaṃ° BC °pânâni su° C °vârikasaṃ° B °stṛtâ tâsâṃ ca tî°.

11. B °jâtâ mahânta viṭa° C °jâtâ mahantâ vitataṃ samu°. — 13. BC °pure ca a° B °mbarât vâte°. — 15. B °jâto mahâ mahântaṃ vi° C °jâtâ mahântâ vitataṃ samudgatâḥ.

17. C °shpitâ bhavanti di° C °catasro | dvi° B °catasro dvi° (?) BC °ghushṭo ruci°. — 19. BC °nnâ padmapuṇḍa° C °ṇḍalikehi kusumehi u° B °rîkehi sukumehi u° BC °tpalehi ca || . — 20. B °rvadiçe ekame°.

21. C ekaṃ ekasmiṃ tûryyasmiṃ shashṭhiṃ nṛ° B °kasmiṃ bhûryasmiṃ shashṭhiṃ nṛ°.

तासां च नृत्यमानानां दिव्यकन्यान कानने ।
दिव्यो निश्चरते शब्दो दिव्यकन्यागणे यथा ॥
सुवर्णपादे पर्यङ्के निर्मिते रत्नामये ।
संस्कृते सुविसृष्टे च स्वर्गकायस्मि मोदसि ॥
सुवर्णपादे पर्यङ्के निर्मिते रत्नामये ।
प्रेक्षमाणो दिशा सर्वा शय्या च उपशोभसि ॥
तस्मिं निषण्णं .... पर्यङ्के तूलिकास्तृते ।
अलंकृता देवकन्या वीजन्ति चा[164]मरेहि ते ॥
तवमेते अप्सरसंघा हेमजाला अलंकृता ।
बाहां विक्षीयं नृत्यन्ति गायन्ति च सुवादितं ॥
काचित्तत्र उपगायन्ति उपवादेन्ति अप्सरा ।
काचिच्च उपनृत्यन्ति संगीतस्मिं सुवादिते ॥
काचित्ते रुचिरं शब्दं मुंचन्त्यङ्गेहि सर्वशो ।
कासांचित्सर्वरोमेहि वान्ति गन्धा अमानुषा ॥
तं देवकन्याहि उपेतरूपं
निवेशनं ते यदुमुत्तराहि ।
सुवर्णकंचुककृतभूतिमेतं
भवनमहो संकृतमप्सरोहि ॥
किं त्वं कर्म करित्वान पूर्वं अन्यासु जातिषु ।
केन कुशलमूलेन त्रायस्त्रिंशोपपद्यथ ॥
किं त्वं कर्म करित्वान पूर्वे मानुष्यके भवे ।

1. C °nâṁ devakaññyâ° B °syakaññyâ ° nane di°. — 2. C divyâ niçca° B divyâç cara° BC °jakaññyâ°. — 3. C °paryyaṁkanirmite ratnâmate | . — 4. B °suviprishthe vâ sarvâ ca viyamâdasi | C °shṭe vâ sarva ca viyamo°. — 5. C °paryyake°.

6. C °mânâ diçâ° B °mâṇâ diçâ° C °sarve lira° BC °hmâ ca u° B °çobhite | . — 7. BC °nisharṇṇo paryaṁko(C °ryyaṁke) tû° C °stṛitam alaṁ° B °te alaṁ°. — 8. BC °kṛitâ de° C °vakaññyâ vi ° rehi câmarehi ca tvam ete°. — 9. BC tvam ete° C °lâ abhujjâtâ alaṁ°. — 10. BC °dite | .

11. C °ā tatropagâ ° vâyanti a° B °vâdanti a°. — 12. C kâcid upa° BC °nti upi° C °gîtesmiṁ B °ditâ | . — 13. C °ruciraçabde socyatyaṁ | gahi sa° B °muñcatyaṅge°. — 15. B C °devakaññyâ ° rûpâ nive°.

17. C °kaṁcukkhi bhûtam etaṁ° B °bhûtam etaṁ bhavâṁ agholaṁ° C °bhavâṁ utha- kṛitaṁ me apsa° B °tena sva apsa°. — 19. C °pûrve a°. — 20. C °mûlena vipâ° B °mûlena karmanâ trayastriṁçopapadyatha kiṁ tvaṁ°.

21. B °vi pûrve | mânushye bhave | .

केन कुशलमूलेन विपाकमनुभोषिमं ॥
केन त्वया वर्णं लब्धो आयुर्वंशो यशो बलं ।
ऋद्धिं च परिवारं च अनुभोषि अमानुषं ॥
किं त्वया कल्याणं कर्म कारित्वा अन्यासु जातिषु ।
केन कुशलकर्मेण विपाकमनुभोषिमं ॥
केन ते ब्रह्मचर्येण संयमेन दमेन च ।
केन कुशलकर्मेण स्वर्गकायस्मि मोदसि ॥
केनापि एवं ज्वलितो अनुभावो वर्णो च ते ।
केन कुशलकर्मेण सर्वा दिशां प्रभाससि ।
पृच्छितो देवपुत्र ब्रूहि कस्य कर्मस्यिदं फलं ॥
सो देवपुत्रो आत्तमना मौद्गल्यायनेन पृच्छितो ।
प्रश्नं पृष्टो वियाकर्षि स्थविरस्येति मे श्रुतं ॥
अहं कपिलवस्तुस्मिं शाक्यानां नगरोत्तमे ।
अट्टालकोट्टरचिते दृढप्राकारतोरणे ॥
गोधामुखनिर्यूहदृढार्गलकपाटतोरणे ।
हयगजरथाकीर्णे आवासि शाक्यश्रेष्ठिनो ॥
आकीर्णजनमनुष्ये नगरे साधुनिर्मिते ।
शुद्धोदनस्य पुत्रस्य सहजो आसि कण्ठको ॥
यदा चाभिनिष्क्रमेसि प्रव्रज्याये नरोत्तमो ।
तदा स वचनमाह वल्गुसम्यग्गिरं ब्रवीत् ॥

1. BC °nubhāsiyaṁ | . — 2. C °labdhaṁ | āyu varṇṇo yaço baraṁ | . — 3. B ṛiddhi ca pa° BC °vāro ca a° B °nubhāsi°. — 4. B °lyāṇa karma° C °lyāṇe karmakari pūrve anya° B °tvāna pūrve anyā°. — 5. C kuça° B °çalakarmeshu vi° bhasi māṁ | C °bhosi māṁ.

6. BC tena te bra°. — 7. C °kāyesmiṁ mo°. — 8. BC kenāsi e° C °litānubhāsā varṇṇo° B °lito nubhā° BC °ṇṇo ca te sarvā(B °rvāṁ) diçāṁ°. — 9. BC °bhāsati | . — 10. C °putro kruhi° B °tra kruhi° BC °rmasyedaṁ°.

11. C °putra ā° B °tamano maudgalyāyeṇa pṛi°. — 12. BC °shṭo vyāka ṛishi° C °rasya iti°. — 13. C °çākānāṁ naro° B °kyānāṁ ca naro°. — 14. B aṭṭalakhoṭakelacitte dṛi° C aṭṭālakhotakaraci°. — 15. C gādhāmu° BC °mukha ni° C °dhāgde kapāṭato° B °ṇe rasya | .

16. C ramyuḍaya° BC °thāmetruṇo āvāso çākyaçreshṭhi(C °shṭinya | . — 17. B °ṇṇa bahujanamanushya naga° C °shyeṇa naga° BC °rmite ça°. — 18. BC °jo haṁ kaṇṭha-(B °ntha)ko āsi | . — 19. C yathā cā° °shkramasi pra° B °shkramati pra° BC °ttame | . — 20. BC °dā sa jyāmija āha(B °ha || ) ba° B °ggiri bra° C °ggiri bra°.

तां सह गिरां श्रुणित्वा हर्षजातेन चेतसा
वेगजातो नमस्यन्तो वंदेहं पुरुषोत्तमं ॥
परेषां विषयं गत्वा उद्गतस्मिं दिवाकरे ।
मम छन्दकं च विहाय अनवेक्षो स प्रक्रमे ॥
तस्य ताम्रनखा चरणां जिह्वाया परिलेहिय ।
रोदमानो उदीक्षेयं गच्छन्तं पुरुषोत्तमं ॥
तस्यैव अदर्शनेन शाक्यपुत्रस्य श्रीमतो ।
खुराबाध उत्पदेत् ततो कालं करो[164b]म्यहं ॥
तस्यैवमनुभावेन विमानमावसाम्यहं ।
नारीगणसमाकीर्णं कूटागारं वरोत्तमं ॥
सचेद् मदनो गच्छामि शाक्यसिंहस्य सन्तिके ।
कण्ठको वचनं आह वंदेसि पुरुषोत्तमं ॥
एषो चाहमपि आमंत्रे वन्दितुं पुरुषोत्तमं ।
साधु खु दर्शनं भोति तादृशानां महर्षिणां ॥
तेन मया इदं लब्धं आयुवर्णयशोबलं ।
ऋद्धिं च परिवारं च अनुभोमि अमानुषं ॥
तेन मे ब्रह्मचर्येण संयमेन दमेन च ।
अयं मे तादृशी ऋद्धी अप्रतिकान्ता अमानुषी ॥
तं कर्म कुशलं कृत्वा यत्तं उपचितं पुरा ।
तेन कुशलकर्मेण विपाकमनुभवाम्यहं ॥
भोगा च मे उत्पद्येन्तु ये केचित् मनसि प्रिया ।
देवा च मे नमस्यन्ति तेषां च उपचितो अहं ॥

1. C °girā çru°. — 2. C °nto vandehaṃ pu° B °vadehaṃ pu°. — 3. BC °dgatasmiṃ°. — 4. C °kaṃ ca avahāya anavakṣo sa° B °kaṃ avahāya ana°. — 5. B °hṛdyāṃ palilehiya | C °hṛdyāṃ parilekhiya | .

6. C °yaṃ gachgeyaṃ gaccha°. — 7. C tasyaiṣaṃ ca a° B °mato | . — 8. BC khuro ā° C °bādha u°. — 9. C °mānam eva sā° B °mānam avasā°. — 10. C nārīgaṇasamākīrṇaṃ kūṭā°.

12. C °demi puruṣottamam | sādhu°. — 13. B °pi āmaṃtra vandi°. — 14. C °dhu sha darçanaṃ bhāti tādṛ° B °naṃ bhoati tādṛ°. — 15. C °labdhaṃ yava° B °yaçovaraṃ | .

16. C ṛddhiṃ° B ṛiddhi ca parivāro ca anu° C °sārṣpa anu°. — 17. C °yamena ayaṃ°. — 18. C ayaṃ te tā° C °ṛiddhiṃ pratikāntā amānuṣīṃ B °krānta amānuṣīṃ | .

21. C °upadyeśuḥ ye° B °dyetu ye° BC °manasiṃ priyaṃ | . — 22. C °ahaṃ upavito ahaṃ | B °ca upacitāṃ ahaṃ | .

तस्मिं चित्ते प्रसादेत्व दक्षिणीयेषु तादृशं ।
पश्याति रत्नभूतेन कर्म उपचितं शुभं ॥

इति श्रीमहावस्तुअवदानकथायां कण्ठकस्य व्याकरणं समाप्तं ॥

शुद्धावासेहि देवेहि तहिं अरण्यायतने काषायप्रावृतो लुब्धको निर्मितो । सो दानि बोधिसत्वेन दृष्टो ॥

तत्राद्राक्षीदरण्यस्मिं लुब्धकं काषायप्रावृतं ।
सो तत्र उपसंक्रम्य इदं वचनमब्रवीत् ॥
इमौ काशिकौ गृह्णित्वा देहि काषायं त्वं मम ।
सो तौ काशिकौ गृहीत्वा देति काषायं लुब्धको ॥
ततः काषायं गृह्णित्वा तुष्टो आत्तमनो अभूत् ।
सो पथो मे वरो धीरो उत्तमार्थस्य प्रार्थये ति ॥

बोधिसत्वो धर्मारण्यं वसिष्ठस्य ऋषिस्य आश्रमपदं प्रविष्टः ॥ वसिष्ठो पि ऋषि बोधिसत्वं दृष्ट्वा विस्मितो को अयं भविष्यति मानुषो वा देवो वा शक्रो वा ब्रह्मा वा यस्य कायस्य प्रभाये सर्वमिदं तपोवनमोभासितं ॥ सर्वे ते वटुका बोधिसत्वं दृष्ट्वा त्वरितत्वरिता स्वकस्वकानि पर्णकुटीनि प्रधाविता नानाप्रकाराणि फलानि गृह्य पानीयं च बोधिसत्वमुपसंक्रान्ता ॥

तत्र दृष्टं महाप्राज्ञं तापसं तपतां वरं ।
वसिष्ठं नाम गोत्रेण ददर्श च जगाम च ॥
ताम्रधूमार्जुनजटं ज्वालमिव अदर्शि तं ।

1. C °kshîṇeshu°. — 2. C paçyanti ratnacchatrabhûtena karmopacitaṁ ça° B °karmâṁ upa°. — 3. C °yâṁ kaṁṭha° B °yâṁ kanthakasya°. — 4¹. B °vâsehi de° C °vehi aranyâ° B °shâyaprâvṛi° ka nimito |.
6. BC °kshîd aranya(C °nye)smiṁ lubdhako kâ° B °vṛita so ta° C °vṛitaḥ so taṁ°. — 7. BC so ta (C °taṁ) tatropasaṁ° C °ida va°. — 8. BC °çika gṛi° B °gṛihnitvâ C °gṛihitvâna de° BC °shâye tvaṁ°. — 9. BC °shâyau lu°. — 10. B °gṛihnitvâ C °gṛihitvâ tu° bhû | B °bhûte pathe°.
11. B pathena varo dhiro° C pathe me varo dhî° uttarseti prârthayeti |. — 12¹. B °dhamâra° C °shṭhasya ṛishi° âçṛa |. — 12². C vaçishṭo pi ṛishiḥ bo° B °ṛishiṁ bo° shyati | mâ° C °sho ca | de° kro vâ devo vâ bra° C °sarve imaṁ° B °idaṁ sarva°. — 14. B °tukâ bodhi dṛi° °ritatvaritâ svaka° C °tvaritatvaritaṁ svaka° hya tânipaṁ ca bo° BC °krânto |.
17. C °tâpasaṁ tapatâm varaṁ |. — 18. BC vaçishṭaṁ nâ° B °rçana jagâma ca |. 19. BC °mâru(C °ra)najataṁ(B °ṇadbhataṁ) jaṭaniyam akarshi taṁ |.

आसीनं मुनिमव्ययं निर्वातमिव सागरं ॥
अभिगम्य च धर्मात्मा तं मुनिं शाक्यपुंगवो ।
अनुज्ञातो प्र[165a]विहाय भूमियां उपविष्ट स ॥
समुद्र इव गम्भीरो वीर्यवां हिमवानिव ।
शाक्यराजसुतं दृष्ट्वा महर्षिं विस्मितो अभूत् ॥
को न्वयं वपुषा श्रीमान् ज्वलन्त्यनुपमद्युति ।
सुवर्णो धूमापगतः दीप्यमानो यथानलः ॥
व्यूढोरस्को महाबाहुः सुप्रशस्तकराङ्गुलि ।
समन्तकुक्षिय वृत्तो एणवृत्ति कटीमहान् ॥
कांचनस्तम्भसदृशो गोवृषाक्षो महाद्युतिः ।
शार्दूलवृषभस्कन्धः पद्मपादकरो नघः (?) ॥
शरीरलक्षणैरस्य ज्वालितशतगुणार्चितैः ।
शोभते शरीरं तस्य नक्षत्रैरिव चन्द्रमाः ॥
विभूषणा नैव गात्रेषु रचिता अनुच्छपिका ।
शरीरं भूषयन्त्यस्य लक्षणानि महात्मनः ॥
मेरुमण्डलसारेण गच्छता गजगामिना ।
आक्रान्ता सहसा पद्भ्यां रणतीव वसुन्धरा ॥
स्निग्धगम्भीरशब्देन स्वरेण अनुनादिना ।
त्रिलोकमर्हते कृत्स्नमाज्ञापयितुमोजसा ॥
व्यंजनानि हि या यस्य लक्षणानि च लक्षये ।

1. C °rvântam i°. — 2. C °tmâ taṁ mu° B °kyaççapuṁgavaṁ | C °kyapuṁgavaṁ | . — 3. BC °jñâta praviṣhṭâ° B °bhûyamyâm upaviçentaḥ samu° C °bhûtâyaṁ vyuma praviçamaḥ | . — 4. C °va gaṁbhîro° B °va gaṁbhîrâ vi° BC °vîryâvahimapârçva | .

6. C °çrîmân ajvalanty ana° BC °dyutiṁ | . — 7. C çârdûlavṛṣabhaskandhapadmapâdakaro nadaḥ (cf. l. 11) | suva° BC °varṇṇadhû° C °dhûmrepagataḥ jô(?)pamânâ ya° B °taḥ jôpamânâ ya°. — 8. C vyûhora° BC °prasasta° C °stakulâṅguli | . — 9. C °cakshustraṁ jânavṛi° B °kshu travyâ na vṛi°. — 10. C kâñca° co gopṛishṭokshe ma° B °vṛikshâkshe° C °dyutim nagâ(?) çarî° (l. 12).

11. B °karâmaṁḍaṁga | . — 12. C °nâiḥ tasya jâlaçatguṇaiçcitaiḥ B °guṇocitaiḥ | . — 13. BC çobha(C °bhe)tasya çarîrasya naksha° C °nâraṁâ sibhâ°. — 14. C °naivaṁ gâ° BC °câñyana(C °ñâ)câpatâ | . — 15. BC °shayantasya la° B °naḥ meru°.

16. C merumaṇḍalasâgarena gacchantâ gajagâminaḥ | B °mino | . — 17. C âkramantâ sahasâbhyâṁ vasupativa vasu° B âkrânte saha °dbhyâṁ vanati° BC °ndharâṁ | . — 18. C °mbhîrasa ça° B °mbhîrasaṁdena svareṇadhyanu° C °reṇadhyanunâdinâ | . — 19. C °rhata kṛtsnâ âjñâ° BC °payato° C °tu tejasâ | .

युक्तो यं सर्वभूतानां त्रिलोकपतिरीश्वरः ॥
प्रभया पूरयन्तेष स्वशरीरसमुत्थया ।
तपोवनमिदं सर्वं उदयन्निव भास्करो ॥
अशीतिव्यंजनोपेतो द्वात्रिंशद्वरलक्षणः ।
सनत्कुमारप्रतिमो कुमारो द्युतिमानयं ॥
सर्वलक्षणसंपन्नं सर्वभूतमनोहरं ।
कुमारं परिपृच्छेयं महर्षिं उपगम्य तं ॥
गन्धर्वशशिसंकाश देवगर्भोपम युवा ।
कस्य त्वं किंनिमित्तं वा तपोवनमुपागतो ॥
सत्यानुपरिवर्तिन्या सर्वभूतात्मया गिरा ।
श्लक्ष्णया प्रियवादिन्या बभाषे स नृपात्मजः ॥
इक्ष्वाकुवंशप्रभवः शुद्धोदननृपात्मजः ।
विहाय पृथिवीं राज्यं उज्झित्वा मोक्षमाश्रितः ॥
लोकान्तु बद्धमिदं दुःखैर्दृष्ट्वैवं समभिद्रुतं ।
मोक्षार्थमभिनिष्क्रान्तो जातिव्याधिजरादिभिः ॥
यत्र सर्वं न भवते यत्र सर्वं निरुध्यते ।
यत्रोपशाम्यति सर्वं तत्पदं प्रार्थयाम्यहं ॥
एवमुक्ते महाप्राज्ञो महात्मा सत्यवागृषिः ।
उवाच वदतां श्रेष्ठं शाक्यराजकुलोदितं ॥
ईदृशेन हि वृत्तेन वृत्त्या लक्षणसंपदा ।
प्रज्ञया च महाभाग न किंचिद्यं न प्रापये ॥

1. B °lokapratim īçva° C °lokâpatim îçvaro ‖. — 2. B °pûrayetye°. — 3. C °sarva udayanniva bhâskarah ‖ B °dayanneva bhâskare ‖. — 4. C °janampeto dvâ° kshaṇa ‖. — 5. C °pratimâ ca ku° BC °mârâ dyu°.

7. C °echeya maha° mgatâm ‖. — 8. C °saṁkâçaṁ de° B °saṁkâço de° pamaṁ yu° C °pamaṁ yuvân ‖. — 10. BC °âtmajâṁ girâṁ ‖.

11. C °kshṇayâni priyaṁvâdi°. — 12. B °pravabhaḥ çu° C °prabhavo çu°. — 13. B °pṛithivî râ° C °sthitâ ‖. — 14. C lokânto ba° B lokanto ba° r duḥkhaṁ dṛi° C °r duḥkhaiḥ dṛishṭevaṁ sa°. — 15. BC °shkrâtuṁ jâ°.

16. C yatra sarvena bha° B °vate tatra yatra° C °tra sarva niru° B °niruddhyate ‖. — 18. C evaṁm ukte°. — 19. BC °çreshṭaṁ çâ° kulâditaṁ ‖. — 20. C idṛi° BC °hi vṛittena(C °ttehi) vṛityâ la°.

21. C prajñepâra mahâbhoge na ki° B °hâbhâge na ki° BC °ñcid yatra prâ° B °prâpayo ‖.

बोधिसत्वो [165b] दानि वैशालिं गतो आराडं कालामं अल्लीनो । निर्विं-दित्वा नायं मार्गो नैर्याणिको ततो राजगृहं गतो ॥

गत्वा च सो राजगृहं मागधानां गिरिव्रजे ।
पिण्डाये अभिसरेसि आकीर्णवरलक्षणः ॥
तमद्दशासि प्रासादात् श्रेणियो मगधाधिपः ।
प्रसन्नचित्तो दृष्ट्वा च अमात्यां इदमब्रवीत् ॥
इमं भवन्तो पश्यन्तु आकीर्णवरलक्षणं ।
आरोहेण च सम्पन्नं युगमात्रं च प्रेक्षति ॥
उत्क्षिप्तचक्षुर्मेधावी नायमूनकुलोदितो ।
राजदूतानुबन्धन्तु कहिं वासमुपेष्यति ॥
ततो तं संदिशिता दूता पृष्ठतो अनुबन्धिषु ।
गमिष्यति कहिं भिक्षुः कहिं वासमुपेष्यति ॥
पिण्डाये चारं चरित्वान निष्क्रम्य नगरान्मुनिः ।
पाण्डवं अभिसरेसि अत्र वासो भविष्यति ॥
ज्ञात्वा च वासोपगतं एको दूतो उपाविशत् ।
अपरो क्षिप्रमागम्य राज्ञो आरोचये तदा ॥
एष भिक्षुः महाराज पाण्डवस्मिं पुरस्ततः ।
निषण्णो वृक्षमूलस्मिं एकाग्रो सुसमाहितः ॥
द्वीपीव सुतनुं चित्रं व्याघ्रं वा गिरिसानुजं ।
सिंहं वा गिरिदुर्गस्मिं महासिंहो मृगाधिपः ॥
ततो च राजा त्वरमानो अमात्यां अध्यभाषति ।

1a. B °satva dāni vai °ḍaṃ kālāmaṃ | a° BC °allīto ni°. — 1b. C nirviṇitvā nāyaṃ mārgo nairyāṇiko ti | tato° B °nairyāṇiko | tato° C °gataḥ B °gato gatvā°. — 3. BC °rājagri C °mādhakānāṃ gi° B °dhānaṃ | gi° BC °hvaye pi°. — 4. C piṇḍāya abhi° BC °kīrṇa-vaṃ°. — 5. BC °çāsi prāsādāt seniāo maga° C °dhipā.

8. Omis dans C. B āroha ca saṃpannaṃ°. — 9. C °kahu medhāvī nāyaṃ urakulohitaḥ || B °nāye ū(?)nakulohito | . — 10. C °rājadūto nu° BC °sam upeçyati | .

11. C tato sa prishṭhato dūta saṃdiçito anu° B tato sau saṃdiçato dūto pri°. — 12. B °bhikshuḥ ka° BC °peçyati | . — 13. C piṇḍācāraṃ cari ° shkrame nagarāṃ munih | . — 14. C °dyaṃ | . — 15. C °upādiçat | .

16. C °rocāte tadā | . — 17. C esho bhikshur mahā ° raskritaḥ || B °sitaḥ ni° — 18. BC °sharṇṇo vri° C °mūlasmiṃ° BC °ekāgre susa°. — 19. B dīpivāṃ su° C dvīpivāṃ su°. — 20. C °durgasmiṃ°.

21. C °rājā tvara° BC °mātyāṃ adhya°.

क्षिप्रं पन्थं विशोधेथ इच्छाम पुरुषोत्तमं ॥
ततो च ते राजदूता महामात्रा यशस्विनो ।
क्षिप्रं पन्थं विशोधेन्सु: स्वयं राजा इहेष्यति ॥
ततो च ते राजदूता महामात्रा यशस्विनो ।
गत्वा राज्ञो निवेदेन्सु: शुद्धो ते देव पाण्डवो ॥
ततो च निर्यासि राजा सेना च चतुरंगिनी ।
मित्रामात्यपरिवृतो ज्ञातिसंघपुरस्कृतो ॥
यानातो ओतरित्वान पद्सा उपसंक्रमे ।
सारायणीं कथां कृत्वा एकमन्तो उपाविशि ॥
निषद्य प्रमुखो राजा बोधिसत्वमभाषति ।
उदग्रो त्वमसि राज्ञः अश्वारोहो च सैनको ॥
ददामि भोगां भुंजाहि जातीं चाख्याहि पृच्छितो ॥

बोधिसत्व आह ॥

निजजनपदो राज हिमवन्तस्य पार्श्वतः ।
धर्मवीर्येण सम्पन्नो कोशलेषु निवासितो ।
आदित्यो नाम गोत्रेण शाकियो नाम जातिये ॥
ततो कुमा प्रव्रजितो हं न कामां अभिप्रार्थये ।
प्रहाणाय गमिष्यामि वेश्मं मुक्त्वा रत्नामयं ॥
तं खो तथा भोतु सुप्राहि निर्वृतिं
बोधिं च प्राप्तो पुनरागमेसि ।

1. C °prañ pañthe vi° B °drakshâma purushottamaḥ | . — 2. C tato va te° B °râjâdû° BC °dûto ma° B °svine | . — 3. B °çodhetaḥ sva ° heṣveti | . — 4. BC tato ca râ° B °dûto ca ma° C °dûtâto ma° svinaḥ ‖ B °svine | . — 5. B °râjâ niradenaḥ° C °niveditaḥ çu° BC °çuddhâ te° C °pâṇḍulo | B °ṇḍavo | .
6. B °niryati senâ° C °ryâti senâ ca caturaṅgini BC °ni mitrâ°. — 7. C °vṛtaḥ | jñâ° B °vṛta | jñâ° skṛitya yânâ°. — 8. C °ritvâna padasâm upa° B °tvâna | pa° krame si°. — 9. B °yaṇi kathâm° C °yaṇîyaṁ kathâṁ° B °upaviçi ni° C °upaviçitvâ ni°. — 10. C nishidya pra°.
11. C ugra tva ° râjño açvâhairo sainko | . — 12. C °bhuñjehi jâtiṁ câ°. — 13. C °satvo âha ‖ . — 14. B °padâ râjâ hi° C °râjâ hi°. — 15. C °ryeṇa sa ° vâçine | B °vâsine | .
16. C âditya nâma°. — 17. C tato kumârapra° BC °jito hani naniṁ râja kâmâṁ abhiprârthayâmi | . — 18. BC °shyâmi sammajjaṁ ra°. — 19. BC taṁ khu ta° C °apriçelu ni° BC °tiṁ | bodhiṁ ca vira samprâpto bodhiprâpto bodhi(C °dhiṁ) puna° C °gamesi | .

मह्यं पि ध[166ᵃ]र्मं कथयेसि गौतम
यमहं श्रुत्वान व्रजेय स्वर्गंति ॥

बोधिसत्व आह ॥

तं खो महाराज तथा भविष्यति
बोधिं स्पृशिष्यामि न मे च संशयो ।
प्राप्तो च बोधिं पुनरागमिष्यं
धर्मं च ते देशयिष्यं प्रतिगृणोमीति ॥

बोधिसत्व उद्रकं रामपुत्रं आज्ञासि नायं मार्गो निर्याणिको ति । ततो पक्कम्य गयां गतो ॥ गयाशीर्षे पर्वते तिस्रो उपमा प्रतिभायेन्सुः ॥ ततो उरुविल्वां गतो पिण्डाय प्रविष्टो ॥ काश्यपो पुरतो उरुविल्वां पिण्डाये प्रविष्टो ॥

चीवरणं विग्रहित्वा शृणोथ एकाग्रमानसा सर्वे ।
यथा पुरिमजिनसंगमो यशस्विनो बोधिसत्वस्य ॥
प्रव्रज्यामभ्युपेत्वा अराडउद्रकं वने अपरितुष्टो ।
प्रक्रमि दिशं प्रदक्षिणां पुरिमजिननिसेवितं देशं ॥
पिण्डाये प्रतिचरन्तो उरुविल्वां प्राप्तो कनकनिष्कनिभो ।
ग्रामिकघरं आगमि नरनारिसमाकुलं काले ॥
अथ ग्रामिकस्य धीता नामेन सुजाता पण्डिता कुलीना ।
तं दृष्ट्वा राजपुत्रं प्रकम्पिता प्रीतिवेगेन ॥
अश्रूणि प्रवर्तयन्ति पुरतो स्थिता हि सप्रतिस्सगौरवा ।

1. B °dharma katha° C °dharma kârayasi ‖ gauttamaḥ yam a° B °tamaḥ yam a° tvâna gaccheya sva°. — 3. C °satvo âha ‖ . — 5. BC taṃ khu ma° shyâmi | na mamâtra saṃ° C °çayâ | B °çayâ prâ°.

6. C °dharma deça° B °dharmaṃ te de° ṣomi te | . — 8ᵃ. BC °satvaṃ udrakaṃ nâmapo° C °putrakaṃ alli° ryâṇikâ ti | B °ko ti tato°. — 8ᵇ. C °yâṃ tato gayâ° B °gato gayâ°. — 9ᵃ. C °çîrshaparva° uvopamâ pratibhâyetsuḥ | B °yetsuḥ tato°. — 9ᵇ. C °urupilvâṃ° BC °gatâyâṃ piṇḍâya(C °ye) pravishṭo kâçya°. — 10. BC °vilvâ piṇḍâya(C °ya) pra°.

11. B khîvaraṇaṃ° C khîmuravaraṃ vi° BC °grammanasâ° C °sarva yathâ° B °rve yathâ°. — 12. C °thâ pûri° BC °majana° C °svinaḥ bo° BC °tvasya pra°. — 13. BC °jyâye bhyu° C °râḍa ugrakâ dane tushṭo pra° B °drakâ vane a° shṭo pra°. — 14. C °diçâh ‖ pradakshiṇaṃ pu° B °diçâ pradakshimaṃ pu° BC °rimajana° taṃ dinaṃ pi°. — 15. BC °nto | uruvilvâṃ kanakanishka(C °nakavimba)nibho grâ°.

16. B °ghâram a° C °kaṭâram upâ° B °nârisamâkulaṃ | kâle ‖ C °kulakâle | . — 17. BC °ṇḍitâ kuladhitâ | . — 18. BC °gena açruṇi°. — 19. BC açruṇi pra° to sthitehi sa(C °sva)gaurava â°.

उद्यानगमनशान्ता प्रमदायो विय निद्रायन्ति ॥
क्वचि कुरवकतरुशिखरी प्रकुसुमितो बालपुष्पसुविबुद्धो ।
निद्रामलितनयनानां नारीणामिव विबुद्धानां ॥
मधुरपवनेरिता क्वचि नानाद्रुमकुसुमचितवनशाखा ।
आलम्बन्ति परस्परं प्रमदा सखीना वियान्योन्यं ॥
क्वचि कुप्यकवनशाखा प्रकुसुमिता तारुणप्रहसमाना ।
अनुवेल्लिता. . . . सहोदरमिव वत्सला प्रमदा ॥
क्वचि किंशुका कुसुमिता वनराजिवनान्तरे गुहकुले वा ।
रक्ताम्बरोत्तरीया प्रमदा विपुलाक्षिये वनिता ॥
क्वचित् वसुमतिप्रदेशो नवसंपुष्पितपुष्पैः संछन्नो ।
आभरणभरितवसना समलंकृतप्रवरा नववधू व ॥
क्वचि कठिनकण्ठ[167a]कलता मृगमहिषवराहाणा पदाङ्किता ।
शबरशरआहतानां मृगाण रुधिरेण सिक्तानि ॥
क्वचि गजकर्णनिकरो चिति वने पटपाण्डुराकारशकलो ।
क्वचि व्याघ्रकेशरिहता विषादि नरवारणवराहा ॥
क्वचि राक्षसप्रलापा पिशाचकुम्भाण्डभैरवरुतानि ।
क्वचि गुह्यकभणितानि निशासु पवनेषु प्रचरन्ति ॥
क्वचित् निशासु जलधरा गर्जन्ति प्रतिनन्दति आम्रवणा ।

1. C °gamanaçântâ° BC °dâ viya nidrâkabyâ kva°. — 2. C °ci kulavakaruçikhare pra° BC °sumitâni vya° C °vyakapushpâsuvi° BC °ddho nidrâ°. — 3. B °litenayanânâṁ ni° BC °baddhya(C °ddhya)mânânâṁ | (B °nâṁ). — 4. C °pavanâni tâni kva° B °nemitâ kva° BC °cit nânâ° C °drumanadrumaka° BC °khâ â°. — 5. BC âlaṁbanti° B °nti | pa° BC °dâ ça-tilâ viya anyonyaṁ kva°.

6. BC kvacit kupya ° mitatarunna(C °rupa)prahasamâno(C °nâ) anu°. — 7. C anuve-llitada° B °llitâda° BC °dakaçâ sahodaram iva vâtsarâ pramadâ kva°. — 8. C °jivanântare° BC °le vâ raktâ°. — 9. BC °ttarayâ pra° B °vipulakshyate va nitâ | C °vipulakshete va°. — 10. C kvacit kusu° B kvacit dhasuma ° deçâ na ca saṁpushpitakukshi saṁchannam âbha° C °deçâ nava ° shpita kvacit saṁchannam âbha°.

11. B °dhrânya | C °dhânâ |. — 12. BC kvacit kaṭhinakaṇṭha(C °ṭhin)kala° B °râ-haça | pa° C °râhaluṇṭhâ pa° B °ketâ ça°. — 13. BC çavala(C °vara)çatâhatânâṁ | mṛgâṇi rudhiraçiktâni | (C °ktâ) kva°. — 14. BC kvacid gaja ° ro kshiti gaṇe° C °pâṇḍu-lata ° kalpâ kva° B °kalpa kva°. — 15. BC kvacid vyâghra° B °keçahatâ° BC °vishâ(B °khâ)-ditanaravâ°.

16. BC kvacid râksha° C °piçâçaku° BC °ṇḍaçubha(C °bhai)rava°. — 17. BC kvacid gu-hya° C °hyakahyakabha°. — 18. C °çâsu dharâ ga° ndanti vyâ° B °ndati | vyâ° BC °lagaṇâ bhai°.

. . . . भैरवकरा करोन्ति रूपाणि च बहूनि ॥
पादपवनस्मिं तस्मिं विहरति सो सर्वलोकहितकामो ।
चण्डमृगराक्षसानां हृतवक्रमानेन यो रम्यो ॥
यथ चात्मनो मृगपतिः सर्वजगद्धितं ततो विशेषेण ।
प्रार्थयति सत्वसारो सत्वान तदपिदमाचर्यं ॥
एकैकसत्वमोक्षणे यदि कल्पमसंख्यं सर्वसत्वानां ।
दुःखमनुभोमि तारेयं सर्वसत्वानां व्यवसितमिदं ॥
सत्वसारस्य यद्भुयो दुष्करं वने चरित्वा कर्मक्षये ।
स्मृति लब्धा यत्र पथास्मि गतो नायं मार्गो मोक्षाये ॥
अस्ति तस्मिं मति पूर्वे जंबुद्रुमे शाक्यराजमुद्याने ।
प्रथमं ध्यानं समाद्दयि स भविष्यति बोधिये मार्गो ॥
न च शक्यं दुर्बलेन कृशेन परिशुष्करुधिरमांसेन ।
बोधिमभिगन्तुं यदहं पुनराहारमभ्यवहरेयं ॥
देवता अवोच मा त्वं आहरयाहि मा ते यशो परिहाये ।
वयमोजं गात्रेषु तुह्यं उपसंहरिष्यामथ ॥
तस्मासि चाहं सर्वंशो सततमनाहार इत्यभिज्ञातो ।
योजये मह्य तेहि उपसंहारितं मृषा अस्या ॥
सो अनृतवचनभीतो अलमिति तां देवतां प्रतिक्षिपिय ।
मुद्गकुलत्थहरेणुका फाणिकृतं यूषमुपभुंजे ॥

1. BC °ronti | rū° C °pāni ca° BC °hūni pā°. — 2. C °vanesmiṁ viha° B °nasmiṁ | ta° BC °kāmo caṇḍa°. — 3. BC °kshmāṇāṁ hṛidaya bahu° ramyo(C °myā) ya°. — 4. BC yathātmānaṁ mṛigapate sarva° taṁ | ta° sheṇa prā°. — 5. BC °ti satvo mānu° B °ro satvā sa tadāpida° C °ro satvān tadāpi ida° B °ryaṁ eke°.

6. C ekaikasatva° saṁkhyaṁ duḥkha° B °tvānāṁ duḥkha°. — 7. BC duḥkham anubho(C °bhā)mi | tāre° nāṁ dhyavasi° daṁ sa°. — 8. BC °rasya | sha° C °shkara vane° C °karmaṁkshaye BC °ye smṛi°. — 9. BC smṛitiṁ la° B °bdhā pathapathenāsmi gato | nā° C °bdhā viyathathenāsmiṁ gamigato nā° B °kshāye asti°. — 10. BC °smiṁ gami pū° B °pūrvajaṁbu° C °pūrvaṁ jambudruma çā° B °dyāna prathā°.

11. C °maddhiṁ sa bha° B °mādadhi so bha° BC °shyati | bodhāya mārgo na ca çā°. — 12. BC °çākya durba° nasna bo°. — 13. BC °ntaṁ | yad a° reyaṁ deva°. — 14. B °tvaṁ āhāram āharayāhi° C °tvaṁ āhāraṁ āhārayāmi mā te°. — 15. BC vayaṁ ojaṁ gātreshu upa° B °shyāmathaḥ | C °shyāma | .

16. BC tasmāsi a° B °tataṁm anāhāro i° C °tatamanohara i° BC °jñāto oja°. — 17. BC ojeçca mahyato vā u° shā asyā amṛita va°. — 18. C °bhītā alam iti | tāṁ deva° BC °piya mu°. — 19. B °kulaccha(ou °ttha?)hareṇukāpāṇitaṁ yū° C °kolesthahareṇukāpārtha yū° B °bhuṁje anu°.

अनुपूर्वं च शरीरे कासं च बलं च संजनेत्वान ।
आहारं समन्वेषि उरुविल्वमुपागमि स साधु ॥
अथ सा पूर्वजनेत्री सुजाता नामेन प्रस्थितकुलीना ।
न्यग्रोधपादपमूले तिष्ठति मधुपायसं गृह्य ॥
किं ब्रह्मचारि अवचा कर्शितमायासितं तव शरीरं ।
सा पायसं ददत्वा परिकीर्तय राजपुत्रस्य ॥
राजर्षिभिश्च तस्य आसि मधुपायसं तव सुजाते ।
तां अवचि पार्थिवसुतो किमर्थमेतं ददसि दानं ॥
जातिशतानि जनेत्री अभूषि या तस्य शुद्धसत्वस्य ।
सा प्रतिभणेसि मधुरं प्रार्थेमि समृध्यतु मह्यं ॥
हिमवन्तपादपार्श्वे नगरं कपिलाह्वयन्ति [167b] विख्यातं ।
दिशविदिशविश्रुतयशं प्रमुदितनरनारिसंकीर्णं ॥
तस्मिं नगरे कुमारो पुत्रो शुद्धोदनस्य शाक्यस्य ।
अवहाय बान्धवजनं वनं गतो राज्यमुत्सृज्य ॥
षड्वर्षं तस्य व्रजतो तपोवने उग्रे भैरवे वने ।
दानेन मे तस्य भवति प्रणिधी परिपूरिया ॥
तेन तपेन वरो यं मार्गेति मे स समृध्यतु अर्थौ ।
अहमपि तेन पथेन गच्छेय महानरवरेण ॥
ततो प्रादुरासि वाचा अन्तरीक्षादमानुषी ।
सुजाते एषो सो धीरो शाक्यराजकुलोदितो ॥

1. C anupûrvaṁ çarirasthâ° B °rvaṁ çari° BC °tvâna âhâ°. — 2. B âhârasamañgaveshi uru° C °veshi uru°. — 3. C °sujâtanâme ° çdito kulino nya° B °çditâ kulinâ nya°. — 4. BC °grihya kiṁ bra°. — 5. BC °cârî ava° B °vaca darçanaṁ nayanitaṁ kritaṁ çariraṁ | C °vaca darçanaṁ yam idaṁ kritaçariraṁ | .

6. C so pâyasaṁ dadetvâ parikirttayitvâ râ° BC °sya râja°. — 7. C °pâyasan tava | sujâtaṁ ava° B °yasaṁ tava | sujâtâ taṁ ava°. — 8. BC taṁ ava° antaṁ ki° C °taṁ daddasi jânaṁ jâ° B °dânaṁ jâ°. — 9. BC jâtiça° B °shi tasya çu° C °shi jâtasya çu°. — 10. B °tibhavati bhaṇenesu madhu° C °tibhaṇataḥ madhu°.

11. C °hvayanta vi° BC °khyâtaṁ diça°. — 12. B çrutayaçaṁ pra° C °çrutayasaṁ pra° BC °nârîkaṁ°. — 14. C °ndhavajanaṁ vanagato° B °naṁ sarvabândhavajanao vanagato° — 15. C °vrajya tapo° B °vraja tapo° BC °ugrabhairavavaru(C °vavane) tasya dâne°.

16. C °ṇidhi pariye | B °ṇidhi paripûriye tena°. — 17. BC °varo yaṁ mârga(C °rge)ti so samṛi° B °rtho aha° C °rtho ham a°. — 18. C ham a° BC °reṇa ta°. — 19. C tataḥ râdurahi vâcâ° B °durahi vâcâ° BC °kshât mânushi sujâ°. — 20. C sujâtena esha so dhîro kyarâ ° ditaḥ e°

कल्पकोटीसहस्राणि शतानि नयुतानि च ।
भुंजित्वा सौख्यं समन्तो बुध्यते बोधिमुत्तमां ॥
मालाविहारं कृत्वान लोकनाथस्य धातुषु ।
अभेद्यपरिवारेण राजा भोति महर्द्धिको ॥
वर्जेति पापकां धर्मां ये आर्येहि विवर्जिता ।
चरति कुशलां धर्मां ये बुद्धेहि प्रशंसिता ॥
प्रियश्च दयितो भोति सत्कृतश्च प्रशंसितो ।
देवानामथ नागानां ये च लोकस्मि पण्डिता ॥
महता परिवारेण शोभमानो महायशो ।
पूजयति द्विपदश्रेष्ठं संबुद्धमपराजितं ॥
यत्र सो जायते गेहे पुण्यतेजेन तेजितो ।
तं कुलं सत्कृतो भोति राष्ट्रेण निगमेन च ॥
मालाविहारं कृत्वान चित्तं बोधाय नामये ।
तस्यैषा भोति संपत्ति या बुद्धेहि प्रशंसिता ॥
न सो कुब्जो च खंजो वा खलितो वा विचंक्रमो ।
अलंकृतो जनयेहि यत्र यत्रोपपद्यति ॥
दरिद्रं सत्व पश्यित्वा धनेन अभिच्छादये ।
असंहरणीयश्च सो चरन्तो बोधिचारिकां ॥
इमां च वसुधां सर्वां ओशिरित्वा महामतिः ।
अदीनचित्तो सो भोति न सो जातु विषीदति ॥
पुत्रांश्च धीतरांश्चैव भार्यां कल्याणभद्रिकां ।
ओशिरित्वान सो याति यो बोधिमभिप्रस्थितो ॥
पूर्वालापी च सो भोति सुमुखश्च सुदर्शनः ।

1. C °çatâni ca nayu°. — 2. BC °saukhya sa°. — 3. C mâlyâvi°. — 4. BC abhedyaṁ pari° C °vâreṇa çobhu°. — 5. B °pâpakaṁ dha° varjase | .
6. B ceti ku° hi prasaṁçitâ | . — 7. B priyaç ca dayito bho°. — 9. C °çobhatena mahâlala | . — 10. C pûjenti dvi° B °jayanti dvipadaṁ çre° C °çreshṭaṁ saṁ°.
12. BC °tkṛito bho°. — 13. C mâlyâvi° B °vihâlaṁ kṛi° C °nâmate | . — 14. B tasyaishâṁ bho° C tasyaishâṁ bhonti saṁpattiṁ yaṁ ca bu° B °tti yaṁ bu° C °ddhe praçaṁsitâḥ | . — 15. B na so bubjo° C °kubjena yaṁjaṁ vâ kha° BC °vicakramo | .
16. B °hi yatro yatropa° C °dyanti | . — 17. C °satvaṁ paçcitvâ°. — 19. BC imaṁ ca° B °sarve osari° C °osiri° hâmati | B °hâmatiḥ adi°. — 20. C °tu nishîdata | .
21. C putrâṁ ca dhitarâṁçcaivaṁ bhâ° B çadhitarâṁ || . — 22. BC °tvâna so jâti yo bo°. — 23. BC °pî ca bho° C °mukhâ ca sudarçanaḥ | .

न सो हन्यति ईर्योये न च मानेन कदा चन ॥
सो अनीपुं सूरतञेव चानिये पारमिंगतो ।
हितैषी गुणसंपन्नो यो बोधिमभिप्रस्थितो ॥
रतनं सर्वलोकस्मिं उत्पादस्तस्य दुर्ल[219b]भो ।
अनिंदितो दक्षिणीयो यो बोधिमभिप्रस्थितो ॥
गगणे निमिषे शक्यं वालेन गणेतु तारका ।
न तस्य गुणपर्यंतं शक्यं वाचाय भाषितुं ॥
शक्यं सर्वेषां सत्वानां चित्ताध्वचित्तं जानितुं ।
न तस्य गुणपर्यंतं शक्यं वाचाय भाषितुं ॥
महासमुद्राश्चत्वारो वालेन मिनतां तथा ।
नागकोटीसहस्राणि न तस्य गुण भाषितुं ॥
ये रोमा सर्वसत्वानां गतिषु षट्सु ये जने ।
गणेतु निमिषे शक्यं न तस्य गुण भाषितुं ॥
यथेयं वसुधा सर्वा आपस्कन्धे प्रतिष्ठिता ।
निर्मितुं शक्यते वालेन न तस्य गुणा भाषितुं ॥
देवागारमुपादाय ये कल्पस्थायिजीविनो ।
ये यवान्तरेण वृत्ता ये च भूमि अनागता ॥
पुष्पा फलानि च शक्यं गणयितुं विजानता ।
न तस्य बुद्धपुत्रस्य गुणपर्यन्त भाषितुं ॥
भाषेयुस्तस्य शूरस्य वर्णमालां मनोरमां ।

1. C namo ha° B °nyati irshyāye na na mā° C °rshyā ca kadā cid yena mānasaḥ | . — 2. C so anlya sura° B °rahu sura° C °gataḥ | . — 3. C °saṁpannā yo°. — 4. C °lokasmiṁ u° B °tpāda tasyā° C °dullabhaḥ | . — 5. C °kshiṇiye bo° B °kshiṇiyā yo bo°.

6. B gaganesmiṁ nimittaṁ ça° C gaganesmiṁ nirmitaṁ çakyaṁ bale gaganetakaṁ | B °lena gaganottakaṁ | . — 7. BC °paryantaḥ ça°. — 8. BC na ça° C °citta jā°. — 9. B °ryantaḥ ça°. — 10. B °mudraç catvāra cālena ninikan tathā | C °mudra catvāra vālena gaganesituṁ.

12. BC °roma sarva° C °nāṁ shaḍabhiḥ gatishu jage gane° B °shaḍebhi jage | . — 13. C gaṇetuṁ nirmita çakyaṁ° B °nimittaṁ na çakyaṁ çakyaṁ tasya°. — 14. C °vasudhāṁ sa° BC °sarve ā° C °tisthitā | . — 15. BC nimittaṁ ça° B °kyate çālena° C °bālaṁ na ta° shitaṁ | .

16. C devyāgā° B devānāgām upā° C °dāya dhyāyinām kalpasthāyināṁ | B °no dhyāyināṁ | . — 17. C yenāṁtare vṛi° B ye akrāntare vṛi° C °bhūmishu anāyako | . — 18. BC pushpaphalāniç ca çakyante te(B °nte na te)shāṁ vi(C °shāṁ ca abhi)jānatā(C °tāḥ) | . — 19. BC çaleni anyulānāṁ ca bhāshe° B °rasya | varuṇa° C °rasya ca | varṇa° māṁ ca na tasya guṇa bhāshituṁ | ye ta° B °nāṁ yas ta°.

न शक्यं बुद्धपुत्रस्य गुणपर्यन्त भाषितुं ॥
कोटीशतसहस्राणि यः से करेय अप्रियं ।
देवा मनुष्यां वर्जेत्वा निरयस्तस्य गोचरः ॥
अन्धो अचक्षुको भोति दुःखितो अपरायणो ।
उत्पीडां बोधिसत्वानां यः करोति अविद्दसु ॥
च्युतो अवीचिं गच्छेया दारुणं भयभैरवं ।
महता आत्मभावेन दुःखां वेदेति वेदनां ॥
योजनआत्मभावेन भोति तत्रोपपद्यते ।
समन्तमण्डलाकीर्णो समन्तपरितापितो ॥
पंच शीर्षसहस्राणि आत्मभावे प्रतिष्ठिता ।
एकशीर्षे च जिह्वानां शता पंच अनूनका ॥
हलानां शत एकस्मिं जिह्वाये प्रतिपादिता ।
तं पाचेति महाघोरं पापकर्मस्य तत्फलं ॥
अवीचिपतस्थविस्तान तपनं च प्रतापनं ।
वेदेति तत्र दुर्मेधो पौराणां दुष्कृतं नरो ॥
उत्पीडां बुद्धपुत्राणां यः करोति अविद्दसु ।
न तस्य सुलभो जातु भेष्यति मानुषो भवः ॥
कोटीशतसहस्राणि शतानि नयुतानि च ।
दुःखा वेदनां वेदयति ततोभिद्दाणं पश्यति ॥
मञ्जाघासो विषो भोति अभिमर्दो भयानको ।

1. B yas tasya bu° C ye tasya bu° B °sya | guṇaparyaṁta bhā°. — 2. C devakoṭiçata° B koṭiçata° BC °srāṇi çatāni na sukaraṇyā | apriyaṁ apriya(B °yamano) devā°. — 3. C desānāṁ manu° °sya bhogetvā gocarādhya aca°. — 4. C °ḳkhito parāyaṇāḥ tasya guṇapa-ryaṁta bhāshituṁ | u°. — 5. BC utpādāṁ bo° B °ti acidṛço | C °ti abhidṛçā | .

6. B °vici ga° BC °ccheyā so dāru°. — 8. BC yojanāṁ ātma°. — 9. BC °kirṇṇā deśā(C °sāḥ) sama° B °ritrāyitā | C °tāpitāḥ | . — 10. B °srā ātma ātmabhave° C °srā-ṇāṁ ātmabhāve pratisthitā | .

11. BC °çirshā ca ji° C °nimako | . — 12. C phalā °smiṁ jihūyā pra° B °jihvayā pra° C °ditaḥ | . — 13. B taṁ pāpeti ma° C taṁ pāteti ma°. — 14. C aviciṁ ca cyu-tā°. — 15. C °rmedhaḥ pau°.

16. BC °putrāṇ yaḥ(C °ya) ka° B °ti abhiddaçāna | C °ti abhidarçano | . — 17. C tasya ca su° BC °surabdha jātuṁ bhe° B °to manu° C °nushā bha°. — 19. C °ḳkhāṁ ve-danāṁ vedetvā tato° B °yanti tato° BC °nidāni paçyati | . — 20. BC maṁjāghaso visho bhoti alamarddo° C °yānako | .

उत्पीडनं करित्वान बुद्धपुत्राण तायिनां ॥
क्षुधापिपासामधिगतो पापकर्मस्य तत्फलं ।
न सो भोजनं लब्धान जातु तृप्तीय भुंजति ॥
ततो च्यवित्वा यमलोके महाद्रोणिषु खज्जति ।
न त्राणं लभते [२२०ª] जातु कृत्वा उत्पीड भिक्षुणां ॥
ततो च्युतः कालगतो मानुषं लोकमागतो ।
जात्यन्धो भोति दुर्मेधो दुष्टचित्तो असंवृतो ॥
वाचा दुर्भाषिता भवति असत्या घोषपापिका ।
मनुष्येहि खादितान क्षिप्रं गच्छति दुर्गतिं ॥
कल्पकोटीसहस्रेहि न जातु बुद्धं पश्यति ।
उत्पीडां बुद्धपुत्राणां यः करोति असंवृतो ॥
यस्तु बुद्धपुत्राणां करोन्तो रक्ष धार्मिकां ।
वर्जेति दुर्गती सर्वा क्षिप्रं गच्छति स्वर्गतिं ॥
आढ्यो महाधनो भवति बलवन्तो विशारदो ।
स्मृतिप्रज्ञाय संपन्नो सुखितो भोत्यनुपद्रुतो ॥
यदा च लोकप्रद्योता भवन्ति परिनिर्वृता ।
पश्चित्वा बुद्धस्तूपानां सत्करोन्ति पुनर्पुनः ॥
को इमानिदृशा धर्मा श्रुत्वा बुद्धस्य भाषितां ।
प्रमादं बुद्धपुत्राणां न करेया पुनः पुनः ॥
यत्र बुद्धसहस्राणि शतानि नयुतानि च ।
यथा वालिका गंगाये एत्तकां कल्प सत्करे ॥
यत्र प्रलुज्यन्ते सद्धर्मं लोकनाथेन दर्शितं ।

1. C °putreṇa tāyi° B °putrāṇa tāyinām̃ | . — 2. C °pāsādhi°. — 3. C °tṛiptim̃ ya bhum̃°. — 4. C °yamale kshipram̃ kṛi°. — 5. C °tpīḍya bhi°.

6. C °cyuto kā°. — 8. B °shito bha° C °vanti asatyā yecapā° B °tyā yethapapikā | . — 9. C °gacchanti du°. — 10. C °buddhama paçyati | .

11. BC utpīḍā bu° B °ṇām̃ ya karo°. — 12. B yasto ° roti pūjām̃ dhā° C °roti rakshām̃ dharmikām̃ | . — 13. C vrajati durgatim̃ kshipram̃ sarvam̃ ga° B °ti sarvām̃ kshi ° rgatim̃ | . — 14. B °ti varavanto°.

16. B °loke pra° BC °paranirvṛitā(C °tāḥ) | . — 17. C °stūpabuddhānām̃ sa°. — 18. BC kā i° C °mān idṛiçān dharmā çru° B °dharmam̃ çru° BC °shitam̃ | . — 19. C °kareyya punar punaḥ | . — 20. C °çatāni ca na°.

21. BC °vālika gam̃°. — 22. C ye ca pralujyanti saddharmo lo° B °jjati saddharmaḥ a° C °thena deçitāḥ | B °rçitaḥ a°.

एकरात्रिंदिवं चापि धारये पुण्यं विशिष्यति ॥
अहं च पूजितो भोति बुद्धज्ञाने प्रतिष्ठितः ।
ते पि च पूजिता बुद्धा धर्मं बुज्झन्ति धारिते ॥
प्रलुज्जमाने सद्धर्मे यो रक्षे शास्तु शासनं ।
कल्पकोटीसहस्रेहि न सो जातु विहन्यति ॥
कायेन सुखितो भोति न स रोगं च गच्छति ।
अमनापसहस्रेहि न जातु संहरीयति ॥
क्षान्तिये भोति संपन्नो सूरतः सखिलो मृदुः ।
मैत्रचित्तश्च सत्वेभ्यो रक्षिता शास्तु शासनं ॥
सुखितो प्रमुदितः प्रतिक्रोशं
प्रतिलभति पुरिमनिरोधदृष्टं ।
सर्वा जहति अक्षणां अशेषा
जिनवरधर्मं धारेत्वा बुज्झमानं ॥
कवचितो सदा भोति लक्षणेहि
यथा गगनं प्रतिपूरं तारकेहि ।
स मधुरवचनो मनोज्ञघोषो
जिनवरधर्मं धारेत बुज्झमानं ॥
हीनकुलविवर्जितो स भोति
सुखितं येषु न अस्ति दौर्मनस्यं ।
आढ्य सुखित भोति भोगवां च

1. C ekaṁ rātridi° BC °divasaṁ cā° C °dhārayet punya vi° B °raye idaṁ punyaṁ°. — 2. C °pūjaya bhoti bu° B °bhoti bu° C °shṭhitā | . — 3. C °ca pujyate buddhāṁ dha° B °pūjita bu ° rmaṁ bujjanti dhā° C °dharmaṁ bujyaṁti dhā° BC °dhāritha | . — 4. C pralujyamā° B pralujjamāne saddharme pralujjanti ca vāritha | pralujjamāne saddharme yā rakshesyātu° C °rme yā raksha çātu°. — 5. C °so hanyati jātu ca | .

6. C °khitā bhonti na sa rāgaṁ sa ga° B °gaṁ na sa gacchati | . — 7. B amanopa°. — 8. B °nno suratah° C °nne surato sa°. — 9. C °citte ca satveshu ca ° stu çāsanaṁ | . — 10. C °tah pritih kro° B °tah pratikoçaṁ pratilabhati | pu° C °labhoti ca | pu ° rodhaṁ saṁdṛ° B °drishṭhaṁ sarvāṁ°.

12. C °kshaṇā | açeshāṁ jinavare dharma° B °çāṁ | aç° C °bujyaṁ māṁ kvacit | sadā° B °naṁ kavici°. — 14. C kvacit | sadā° B kavicita | sadā° C °bhoti ca laksha ° thā pratigaganaṁ pure | manojña° B °pūratā | rako hi sama°.

16. C manojñaghosho tārako madhu ° nojñah || jinava° B °sho | ji° C °bujyamānāṁ ui°. — 18. C °varjjitasya bhonti su° B °rjitāsya bhonti su° BC °khita ye°. — 20. C āḍhyo sukhita bhogavāṁ° BC °vāṁ aji° C °bujyamānaṁ | .

जिनवरधर्मं धारेत्व युज्यमानं ॥
स्थामवर उपेति वीर्यवन्तो
विचरति सर्वा वसुन्धरां अदीनो ।
बुद्धशतसहस्र सत्करोति
जिनवरधर्मं धारेत्व युज्यमानं ॥
स्मृतिमतिगतिवन्तो पुण्यवन्तो
परमसुखकृतु भोति नरामरेषु ।
वि[१९०b]दु परमप्रशस्त जंबुद्वीपे
जिनवरधर्मं धारेत्व युज्यमानं ॥
परमसुरूपमभिरूपदर्शनीयो
प्रिय भवति नरनारीणां मनुष्याणां ।
सुरुचिर प्रशस्तु पुण्यवन्तो
जिनवरधर्मं धारेत्व युज्यमानं ॥
कल्पशतसहस्रकोटी पूरं
गुणस्थाविर्यसंगतो अनन्तज्ञानी ।
नो च लभेय सर्वं चानुशंसं
जिनवरशासनं युज्जितं धरेत्वा ॥
येषामिमं पुरिमसूत्र शास्ता
दशबलधारि प्रकाशि देवदेवो ।
तेषामिदं नराणां हर्षसंप्रकम्प्यं
भविष्यति पश्चिमे काले वर्तमाने ॥
भाषिष्य जिनवरधर्मं निर्वृतानां

2. C °peya viryyara° B °peta virya° C °sarvavasuṁ°. — 4. B °tha;outi ji° BC °rma dhaṁ° C °tva pralujjyamānaṁ | B °naṁ smṛ°.

6. B °gatavanta pa° C °gadimanta pa° °kṛita bho° BC °ti sa narā° C °rāmareshu. — 8. C viduḥ pa° °pramastaṁ jaṁ° B °çastaṁ jaṁ° °retvā lu° C °tva pralujjyamānaṁ | . — 10. C °ma surūpa abhidarçaniyo priya bha° BC °riṇāṁ | manuṣāṁ su°.

12. C °cira praçasta pa° °tva lujyamānaṁ | . — 14. B °tipurāṁ guṇastaviyasaṁgato antajñāni no ca° C °ti puro guṇastaviya antajñānino ca°.

16. BC °labhiya sa° C °nusaṁço | ji° B °çaṁso ji °çāsaneshu jina dhareyo | C °çāsaneshu jinayo dhareyo yeshā°. — 18. BC °ri devadevaṁ | . — 20. C °shāṁ imaṁ nagariṇāṁ° B °nagarāṇāṁ harshapratāptaṁ bha° C °harshaprakaṁpya bha° BC °kāle vartamāne | .

22. BC °eṣu dharma jina° °ti gauraveçaṁ (B °ṣa) | .

श्रद्धाय तेषां धरयति गारवेण ।
दानं च देति अपरिमितचेतियेषु
पूजेति संघ भगवतो च गारवेण ॥
प्रलुज्यमाने जिनवरशासनस्मिं
धारेति शास्तु वरधर्मनेत्री ।
सो तं अकरित्वा शुभकर्मश्रेष्ठं
नोपक्रमे शुभं कालकर्म ॥
सर्वे च सत्वा सियु लोकनाथा
समन्तचक्षू हतरजनिष्क्लेशा ।
ते कल्पकोटीनयुतां सहस्रां
भाषेयु वर्णा जिनवरे पुष्पदिन्ने ॥
पापं च कर्म विजहति सर्वकालं
श्रेष्ठं च धर्मं प्रकरि उदग्रचित्तो ।
चरित्वार्थं सुचिरं चारिकासु
सो बुद्धो लोके भवति अतुल्यो ॥
यः सार्षपेण सूक्ष्मतरं गृहीत्वा
धूपेय गन्धं भगवतो चेतियेषु ।
तस्यानुशंसां शृणोथ मे भाष्यमाणां
प्रसन्नचित्ता जहिय क्लेशां ॥
सो पुण्यवन्तो चरति दिशासु
अरोगप्राप्तो दृढव्रत अप्रमत्तो ।
विनेति लोकां चरयन्तो चारिकां
प्रियो मनापो भवति जनस्य ॥

2. C °cetiyeshu° B °garâtva gâraveṇa | C °to tva gâraveṇaṁ | . — 4. C prulujyamâ° çâsanesmiṁ°.
6. C °taṁ kari° BC °çreshṭaṁ nopakrame çubhe kâ° B °kâlaṁ karmaṁ | . — 8. BC °siya lokanâtho samantarakshu ha°. — 10. BC °sheya va° dinnaṁ | .
12. C °çreshṭaṁ ca dharmmaṁ pra°. — 14. BC caritvârthaṁ° C °buddha lo° vanti atuliyaḥ° B °tulo | .
16. C yaḥ sarvepeṇa sû° raṁ gṛihitvâ dhû°. — 18. B °nuçaṁsâ çri° C °nuçaṁçâ çri° BC °mâṇâ pra° B °ttâ tahiya° C °ttâ tahiṁ yashkileçâṁ | . — 20. BC °ṇyavanto cara° prâpta dṛi° B °tto vi°.
22. BC vineti çokâṁ cara°.

राज्यं च प्राप्तो जिन सत्करोति
महानुभावो विदु चक्रवर्ती ।
सुवर्णवर्णो स्फुटो लक्षणेहि
मनोज्ञगन्धां लभते सर्वकालं ॥
तस्य दुःखं नास्ति दौर्मनस्यं
न भोगां हीनां विचरति चारिकासु ।
आढ्यश्च भोति धनवां प्रभूतभोगो
यशोयप्राप्तो विचरति सर्वलोके ॥
उपसंक्रमि बहुजनं पृच्छमानो
धर्मं विशिष्टं जिनशासनस्मिं ।
विनेति कांक्षां विरजं भाषमाणाः
श्रुत्वा च धर्मं लभे सौमनस्यं ॥
न पापकर्मं करि हीनबुद्धिः
ज्ञानं तु ज्ञात्वा परमं विशिष्टो ।
करोति दिव्यं शुभप्रेमणीयं
शोधेति चक्षुं विधमति अन्धकारं ॥
न तीव्ररागो भवति न तीव्रदोषो
न तीव्रमोहो भवति मनुष्यलोके ।
चरन्त सुखं आशयवप्राप्त[२२१a]र्थं
करोति अर्थं अपरिमितमनन्तं ॥
न कस्यचिद्भवति प्रदुष्टचित्तो
न भोगहानिर्भवते कदाचित् ।
न तस्य नीचो भवति जनस्य
धूपेन गन्धं जिनचैतियेषु ॥

1. BC rájye ca prá° C °viduç cakravartiḥ | . — 3. C suvarṇṇo sphuṭala° B °ṛṇṇa-varṇṇá sphuṭala° C °gandhá la°. — 5. C na tasya° BC °ḥkhaṁ nápi dau° B °syaṁ na bho(= °bho)gahínáṁ vitarauto cá° C °syaṁ na bhogahínáṁ vicari cári°.
7. BC °ça bhavati dha° B °bhútalabhágo ape ° rvaloke | . — 9. BC °kramitva (B °tváṁ) bahujana pṛcchamánáya dha° C °çishṭhaṁ jinaçásanasmiṁ |.
11. C °káṅkshá gi° máṇá çrutvá ca dharma labhet saumu° B °saurmanasyaṁ | . — 13. B °ddhiḥ | jñánajñátaṁ pame viçi° C °jñánánujñátaṁ paramo viçishṭaṁ karo°.
19. C °rontu artha° B °roti | artha° C °rimitántaṁ | .
21. B na tasya kaçcid bha° dushṭhaci° hánir bha° C °háni bhavate°. — 23. BC °tasya nīyo bha° C °pelya ga°.

विशुद्धचित्तो विमलो विधूतपापः
शान्तः प्रशान्तः परशमेनुपेतः ।
कल्पान कोटी नयुता शतां चरित्वा
बोधिं अतुल्यां स्पृशति अदीनचित्तो ॥
सत्वान कोटीनयुतां सहस्रां
मार्गे अशोके परमे स्थपेत्वा ।
वर्तेत्व चक्रं अनुत्तरं सर्वलोके
निर्वायि पश्चा हतरजो निष्किलेशो ॥
पताकं दत्वा भगवतो चैतियेषु
जनयेत् छन्दं कथयन्ति बुद्ध लोके ।
सो पूजनीयो भवति जनस्य
चरन्तु श्रेष्ठो जिनचारिकायं ॥
विघुष्टशब्दो भवति विदु प्रशंस्यः
शुद्धं विशुद्धं लभे आत्मभावं ।
उद्वीक्षणीयो भवति जनस्य
देवान नागान गुरु पूजितश्च ॥
सुवर्णवर्णो सद आत्मभावो
लाभी च भोति शुभचीवराणां ।
कर्पासिकानामथ कम्बलानां
क्षौमदुकूलान च कौशिकानां ॥
ये जंबुद्वीपे कुलश्रेष्ठ भोन्ति
आढ्या महात्मा बहुधनस्वापतेया ।
तत्रैव तस्य भवतोपपत्ति

1. C °dhûto pâpaḥ çânto praçânto praçamamânupetaḥ | B °çametam anupetaḥ ka°. — 3. B kalpâṇa ko° C °çatâ cari ° tulâṁ spṛi°. — 5. C °koṭinayu ° srâṁ ca mâge açoke paramamârga çive sthite ca | sthavitvâ va° B °paramo çiva | sthapitvâ va°.

7. B vartitatvaṁ cakraṁ° C vartiasva cakraṁ a ° rvâpi paçcâ ha ° jo kishkileço | . — 9. BC °datvâ bha ° to jâtîyeshu janayet | chanda(C °yeta echandako) kathayan buddhaloke | .

11. C °nasyasya cara° BC °çreshṭhâṁ ji°. — 13. C °ghushṭhaça ° ti viduḥ praçaṁço suddhaṁ vi° B °çaṁsaḥ çuddhaṁ vi° C °bhod âtma°. — 15. B ucikshaṇî° C uccaikshaṇî° B °devana nâgâ° C °gânâṁ gu°.

19. C °tha kaṁbarâṇâṁ kshemaṁ du ° na ca kauçalânâṁ | B °kauçakârâṇâṁ | .

21. C °kule çreshṭa bho° BC °âḍhyo ma ° dhanasâpade(C °te)yâ | . — 23. BC tato va tasya° B °bhagavatopapatti° C °bhagavato tatopapattiṁ varjjeti hînâ kulenâpi daridrâ | .

प्रियो मनापो भवति जनस्य ॥
कल्पान कोटीनयुता सहस्रां
लभित्व सौख्यं सुचिरं मर्त्यलोके ।
गत्वान देशं पुरि[३७७]मजिनान बुद्धं
सो बोधिं बुद्धे अजरमरामशोकां ॥
ध्वजं दहित्वा हतरजमलसारे
तं च प्रभूतं लभे सो चिरेण ।
प्रभूतकोशो भवति अनोपमप्रज्ञो
परिवार तस्य होति अदीनचित्तो ॥
लभित्व भोगां विभजति भुंजते च
न तस्य त्रासो भवति न दौर्मनस्यं ।
राजा सो तुष्टो वितरति ग्रामराष्ट्रं
न पापचित्तं जनयति तस्मिं जातु ॥
श्रेष्ठी विशिष्टो भवति प्रभूतकोशो
गृहपतिस्य रतनविचित्रितांगो ।
पुत्रो च राज्ञो अथ वा अमात्यो
राजा च भवति बलचक्रवर्ती ॥
वर्जेति सो हीनकुलानि सर्वान्
विशिष्टभोगं कुलरत्नं लभित्वा ।
सदाप्रमत्तो भवति अलीनचित्तो
वर्जेति कामां यथ मीढकुम्भं ॥

2. B kalpāṇa ko° C °koṭina° B °labhishya saukhyaṁ cuciraṁ°. — 4. C gatvāna deśi pu° B °deçī pu° BC °jinā(B °no)na vastraṁ so bodhi bu° B °ramaramaçokaṁ | C °ramarāçokāṁ | .

6. C °daritvā ha° straṁ taṁ ca° B °sire taṁ prabhū° bhe ro cirena pra° C °labhante cireṇa | . — 8. B °ço bhavati | ano° C °ço bhavati anāpramatto sadā prasanto parivāra tasyo | adīnacitto lābhi° B °tasyo bhavati adī° tto la°. — 10. C lābhi° gāṁ vibhamjati bhogāṁ vibhogatena | na tasya° B °bhuñjate | na ta° C °vanti daurma° BC °syaṁ rā°.

12. C rājasya tu° BC °rāshṭraṁ | na pā° C °janayati° BC °jātu çre°. — 14. BC çreshṭo viçi° C °bhavanti | pra° B °pati ratanaṁ | vicitrimāṅgo putro° C °tiçca ratnaṁ vicitrāṅgaputra°.

16. C putro atha vā amātyo | rājā bhavanti ba° BC °rtī va°. — 18. B varjeti | so hīnakulā sarvān aviçishṭhabhogāṁ ku° C °rvān | viçishṭabhogaṁ kulaçreshṭaratnaṁ sadā° B °tvā sadā°. — 20. C sadā labhitvāpramatto bhavanti | varje° B °citto | varje° C °yathā mī° BC °mbhaṁ viçi°.

विशिष्टरूपं लभते यशांश
कुले च श्रेष्ठे भवतीश्वरश्च ।
परिवारसाश्च भवति अभेद्यो
पुरस्कृतश्च भवति जनेन ॥
न चित्तशूलं जनयति सो परेषु
प्रसन्नचित्तो सदा अप्रमत्तो ।
न तस्य अपि लभते न शक्यं
उल्लोकनीयो सद पुण्यवन्तो ॥
प्रमादं सो न चरति पुण्यवन्तो
सुसंप्रजानो सद सो मनुष्यो ।
सुनिगृहीतो भवति मुक्तचित्तो
न तस्य....धर्मस्य अन्तो ॥
सुतीक्ष्णगात्रो भवति विशिष्टो
सुविशुद्धचित्तो भगवां सत्यवादी ।
यथार्हितानां जने सौमनस्यं
त्राणं चरेय च परायणं च ॥
स वै करित्वा बहुकामनुष्यं
प्रतिष्ठिहित्वा महाज्ञानस्कन्धे ।
अच्छिद्र मण्डं वरपादपेन्द्रं
बुद्धो अतुल्यो वरअग्रबोधिं ॥
हेष्टा उपादाय भवाग्रपूरं

1. B °çishṭharū° C °çishṭa labha° B °kshanśera ku° C °kshaṇáccákule° BC °le çakyeshṭe | (B °shṭo) bhava ° çca pari°. — 3. BC °sāra lasyo bhavati abhe° C °bhedyā | pu° BC °ça bhavati ja°. — 5. B °citto | sadā° C °citto sadā a° BC ° matto na ta°.

7. C °le na çakyaṁ u ° nīyaṁ sadā pu° B °sadā pa ° nto susaṁpra°. — 9. C pramādamāno carati susaṁprajāno sa puṇyavanto pramādaṁ māno carati susaṁprajāto | sa puṇyavanto sadā so manu° B °jāto | sadā so ma° BC °shyo suni°.

11. B °ktacisya dharmasya anto | C °ktacittasya dhanasya anto | . — 13. C sutīkshṇagātrā sadhiçishṭo suvi° B sutīkshṇagātrā bhavati suviçishṭo çuvisuddhacitto sa bhaga° C °tto sa bhavati satya° B °vādi | . — 15. C °janai sau° B °trāṇaṁ caleyaṁ ca pa° C °trāṇaṁ caraṇa ca parāyaṇa ca | .

17. B sarve kari° C sarve cari° B °kāmanasya paristhitvā mahā° C °manasya paristhipitvā mahajñānaskaṁdhe | B °skandho gacchi°. — 19. C acchidra maṇḍaṁ° B °ira shaṇḍaṁ varapādasamudraṁ° C °tulyaṁ vara°.

21. BC °jāmbuna ° traṁ ça°.

जाम्बूनदस्य इमं बुद्धचैत्यं ।
अर्घं क्षपेतु शिरिमेवरूपां
न बुद्धस्तूपे धरयतो एकदीपं ॥
न तस्य कायो भवति विवर्णो
दृढे स पीठे...... यच्छति ।
आलोकप्राप्तो चरे सर्वलोके
दहित्व दीपं भगवतो चेतियेषु ॥
यदा च भोति जिनप्रादुर्भावो
आसन्नप्राप्तो भवति तथागतस्य ।
पुत्रो च भ्राता अथ पिता वा ज्ञातिको
सो श्रावकत्वं लभे नचिरेण ॥
बुद्धान चैत्या नयुतामिता सहस्रा
पूरा भवेयुः यदि सर्षपाणां ।
अर्घं क्षपेतुं तुलय्य जानितुं वा
न बुद्धस्तूपे धरयतो एकदीपं ॥
अग्रार्हं बुद्धो वरदक्षिणीयो
चर्यां चरित्वा चारिकां विशिष्टां ।
कारित्व पूजां गुणसागरस्य
विपाको अस्यो भवति अनोपमो ॥
वैडू[222*]र्यरत्नेहि मणीहि पूरा
सर्वा सियायं महालोकधातु ।
अर्घं क्षपेतु शिरिमेवरूपां
न बुद्धस्तूपे धरयतो एकदीपं ॥

2. C *kshapetum çi* BC *çiri evarû* B *rûpân | na bu* C *stûpe rayato ekapradî* BC *dîpam na ta*. — 4. C *kâya bhava* B *ryo* | dṛiḍham sapîṭho phalikhamtu(C *bhu)jo sechu*.

6. B *pto cara sarva* C *dariva dî*. — 8. B *bhoni ji* BC *prâdurbhâvo âçannaprâpto bhagavato tathâ*. — 10. BC *bhrâtâ ca atha* C *pitâ ca jñâtiko vâ so* B *pitâ jñâtṛiko vâ so*.

12. C *ddhâna kshatrâ* BC *yutopamâm sahasra pû* B *bhavetsuḥ | iha samapâṇam |* C *bhavetsu samapâçam |*. — 14. B *tulayiyitum jâ* C *tum turayitum jâ*. — 16. B agrâha bu* C agrâraham bu* B *dakshaṇî*. — 18. C *sâgaramsya vipâ *pame | B *pamâ |*. — 20. BC *ṇihi puro* C *sipâya sahâ* B *dhâtum | C *dhâtum | sarvaçiriyam mahaloka-dhâtum vastrân na çayyâm vividhâni tasya çakyam kshu*.

22. C *kshapetu çiri eva* B *çiri eva* C *ekapradîpam |*.

कार्षापणेहि सहलोकधातुं
हेष्टा उपादाय भवाग्रपूरं ।
शक्यं चपेतुं शिरिमेवरूपां
न बुद्धस्तूपे धरयतो एकदीपं ॥
चेत्रसहस्रा वरचंदनेन
हेष्टा उपादाय भवाग्रपूरं ।
शक्यं चपेतुं शिरिमेवरूपां
न बुद्धस्तूपे धरयतो एकदीपं ॥
चेला सहस्रा वङ्गवस्त्रपूरा
यं देवलोके शुभकाशि दुष्यं ।
शक्यं चपेतुं शिरिमेवरूपां
न बुद्धस्तूपे धरयतो एकदीपं ॥
देवेषु दिव्या च रत्ना विचित्रा
नागासुरमनुजमहोरगानां ।
शक्यं चपयितुं शिरिमेवरूपां
न बुद्धस्तूपे धरयतो एकदीपं ॥
ये दिव्यगन्धा नरदेवलोके
तेहि भवेया सहा संप्रपूरा ।
शक्यं चपेतुं शिरिमेवरूपां
न बुद्धस्तूपे धरयतो एकदीपं ॥
प्रमाणं शक्यं दिशि विदिशासु ज्ञातुं
आकाशधातु अयमेत्तिको ति ।

1. C kârṣâpaṇe° B karshâyaṇehi°. — 3. B °kyaṁ kshepe° BC °taṁ vidha evarû° C °dharayatâṁ ekapradî°. — 5. BC kshetraṁ saha° B °pûrâṁ ça°.

7. BC °kyaṁ kshepetuṁ çiri eva° B °pâṁ | na bu° C °kapradîpaṁ | . — 9. BC kshetrâṁ saha ° rî yo deva° C °kaçmiṁ du°.

11. BC °çiri eva° B °rûpâ na buddhasya stû° C °buddhaṁ stû ° kapradîpaṁ | . — 13. C donne les vers 16 et 18 deux fois; la répétition est notée sous c. C °vyâ ratanâ(C °nâṁ) vici° BCc °surâmanu ° nâṁ ça°. — 15. B çakyaṁ kshepa° C çakyaṁ kshepetuṁ vidha eva° c °kshepetuṁ° Bc ° çiri evarû° B °pâṁ | na bu ° kadrîpaṁ | Cc ° kapradîpaṁ |.

17. BC °sahasaṁpra°. — 19. BC °kyaṁ kshepetuṁ çiri eva(C °vaṁ)rû° C °kapradîpaṁ |.

21. BC pramâṇa ça ° dhâtumayam e(C °yam a)ttikâni |.

न बुद्धस्तूपे धरयतो एकदीपं
प्रमाण शक्यं गणयितुं पुण्यस्कन्धे ॥
छत्रं मे दिन्नं भगवतो मारुतानां
बुद्धोत्तमस्य व्रजतो नरर्षभस्य ।
चित्तं प्रसादेत्व नरोत्तमस्मिं
मा बुद्धकायं तपे रश्मिराजा ॥
सो तं करित्वा अहं धर्मश्रेष्ठं
शतं सहस्रं भवशक्र आसु ।
ब्रह्मापि आसि अहं ब्रह्मलोके
शतसहस्रं दद्दिय जिनस्य छत्रं ॥
राजा अभूषि अहं चक्रवर्ती
शतसहस्रं दशदिशाचरो भूयः ।
श्रेष्ठी अभूत् धनवां प्रभूतकोशो
गृहपति बहुधनो पुण्यवन्तो ॥
विंशस्य कोटि सुगतोत्तमानां
आगमित मे गुरुकृत सत्कृता च ।
शय्यासनेहि..............
विहारास्तेषां कृतगन्धलिप्ताः ।
दौर्गन्धियं अपगतं सर्वं मह्यं
उष्णं च शीतं विवर्जितं मे ॥
तुष्टो च भोमि परमोद्ग्रचित्तो
पूजां च तेषां परमोत्तमानां ।
करोमि अलंकृत्वा शुभदर्शनीयं

1. C *passe ll.* 1-5. B °paṁ | pra ° skandha ccha°. — 3. B cchakyaṁ me ° rutāyāṁ | bu°. — 5. B °detvāna utta ° kāye tama rasmi° C nabuddhakoye titiramirājā | so°.

7. BC °çreshṭaṁ çataṁ sa ° kra āhu | . — 9. BC °si āhu bra° C °lokaṁ ça° BC °sraṁ tadeya(C °yaṁ) ji°.

11. B °ahi āhu ca° C °ahi āhu varacakra° B °daçavicavarāṁ bhūyaḥ çre° C °diçacaravaṁ bhūyaḥ. — 13. B çreshṭi a° C çreshṭi abhūd dhana ° bhūtako gṛ° BC °nto viṁ°. — 15. BC viṁçaçca ko° B °mānāṁ | āgamitā me gu° BC °kṛitā ça°.

17. BC çayyāsanehi vihāyas teshāṁ°. — 19. C saugandhi° BC °gate sarva°.

21. C °bhomi udagra° B °si paramo udagra ° shāṁ paramotamāṁ | . — 23. C karohi aham alaṁkaritvā yathā darçanoyo° (*page suivante*, l. 6) B °alaṁkaritvā ça ° yaṁ me dadya cchatraṁ ji°.

दृष्टिव चक्षं जिनचेतियेहि ॥
तस्यापि भोति शुभ आत्मभावो
द्वात्रिंशतीहि स्फुट लक्षणेहि ।
येहि स्य नित्यं प्रतपति आत्मभावः
यूपो विशिष्टो यथ कांचनस्य ।
जाम्बूनदस्य यथ दर्शनीयो
असंप्रकीर्णो स्फुटो व्यंजनेहि ॥
अभिज्ञप्राप्तो भवति भिक्षुश्रेष्ठो
चरन्तो नित्यं जिनचारिकासु ।
न भोगहीनो भवति कदाचिद्
देवान भोति गुरु पूजि[२२२ᵃ]तो च ॥
न कामभोगे रमते कदाचिद्
विशुद्धशीलो सद ब्रह्मचारी ।
समादियित्वा पवनं व्रजित्वा
चरित्वध्यानो सुविशेषप्राप्तो ॥
न ध्यानहानिर्भवते कदाचित्
न बोधिचित्तं जहते कदाचित् ।
मैत्राविहारी सद हृष्टचित्तो
दृष्टिव चक्षं जिनचेतियेषु ॥
वाद्येषु पूजित्व नरर्षभस्य
न शोकशल्या प्रसहन्ति तस्य ।
मनोज्ञघोषो च मनुष्यलोके
स्वरं च तस्य विशुद्ध भोति ॥
विशुद्धश्रोतो च उदग्रचित्तो

2. B °âtmâbhâvo dvâ° °yehi yehi°. — 4. B °tyaṁ patapati â° °sya jâ°.
6. B jâmbunada° C °rçansyo atra praki° B °nîyo aprakî° BC °ṭo dyaṁjanehi | . — 8. C abhidyaprâ° °shakaçreshṭo cara° B °shuçreshṭo cara°. — 10. C °vanti kadâci devâna bho°.
12. B °bhogau rama° C °gaiḥ rama° C °bmacârim | . — 14. B samâdiçitvâ° BC °pto sa°.
16. BC na dhânahâ° C °hânim bhava° BC °vate kadâcit | na bo° B °hate kadâcit maitrâ° C °hate kadâcin mai°. — 18. C maitrâvi°. — 20. C vâdyatra pû° °çalyo prahasanti° B °çalyo prasahantasya mano°.
22. C °ghoshaṁ ca manu° BC °ke | sva° B °raṁ vata° BC °bhoti vi°. — 24. B °tto | vi° C °tto viçuddhaçakshu ca su° BC °jâto çro°.

विशुद्धचक्षू च सुसंप्रजानो ।
श्रोतेन्द्रियेण सुउपेतो भोति
वादेन्त्व वाद्यं जिनचेतियेषु ॥
जिह्वास्य भोति तनुदर्शनीया
पद्मप्रकाशा यथ पुण्डरीकं ।
रक्त प्रवाडा यथ देवतानां
यं यं स्वरं वोसिरे दर्शनीयं ॥
न जडो भोति षविज्ञो [कुब्जो] न खंजो
न पि विच्छिन्नांगो विशिष्टो भोति ।
प्रवराद्मा भोति प्रवरात्मभावो
वादेन्त्व वाद्यं जिनचेतियेषु ॥
न तस्य कश्चिज्जनो दुर्मनो स्यात्
देवा च नागा मनुजा महोरगा ।
आश्वासप्राप्तो चरे सर्वलोके
वादेन्त्व वाद्यं जिनचेतियेषु ॥
न जातु गिलानो भवे पाण्डुरांगो
न चापि कुष्ठी नापि च किलासी ।
प्रशंसनीयं लभे चात्मभावं
वादेन्त्व वाद्यं जिनचेतियेषु ॥
प्रभूतचित्तो च चकुब्जगात्रो
उत्तप्तवर्णो यथ सुवर्णबिंबं ।
दृढसमाधि च चसंप्रवेधी

2. C °ndriyena upekalu bhoti | vâdyetva vâdyaṁ° B °ṇa su upekshata bhoti | vâdyetvâ vâdyaṁ° BC °shu ji°. — 4. C jihvasya bho° B °ti tadanuda° BC °nîyo padma° B °prakaçâyaḥ | pa° C °prakâçe | pu° BC °ṇḍarîke rakta°.
6. C °pravâya ca de° B °ḍâya ca de° BC °yaṁ yaṁ smaraṁ o° C °oçiro da°. — 8. B na jaḍḍo bho° BC °bhoti na jaḍo aji ° pi niççitâṅgo vi° B °çishṭha bhoti pra° C °çishṭa bhoti pra°. — 10. C pravarâtmabhâvo vâdevâdetva° B pravarâtma bhoti | pravarâtma°.
12. C °no daurmanasyaṁ devâ ca nâgâ âçvâsaprâ° B °no daurmanasyaṁ de ° nujo mahorago | â°. — 14. C âçvâsaprâ ° ke vâdyetva vâdyaṁ°.
16. C °girâço bha° B °girâmo bhave pâṇḍulâge na câpi kushṭi nâpi ca ki° C °câpi kushṭi nâ° BC °lâsi | . — 18. BC praçaṁçanîyaṁ° C °labhed âtma° BC °vaṁ vâditva°. — 20. B °tto akubja° C °tto avakubja° plavarṇṇâ yathâ suvarṇṇabiṁbaṁ | B °biṁbaṁ dṛi°.
22. C dṛiḍhaṁ sa° B dṛiçaṁ sa° BC °mâdhiṁ ca asaṁ° C °prabodhi vâdyetva° B °veshiṁ vâde°.

वादेत्व वाद्यं जिनचैतियेषु ॥
देवेषु सो . . . . . ईश्वरत्वं
मनुष्यलोकं पि गतु पूजनीयो ।
उत्तप्तवीर्यो भवति अमर्दनीयो
वादेत्व वाद्यं जिनचैतियेषु ॥
न सो कहिंचिज्जने अप्रसादं
न चापि किंचित्परुषं भणाति ।
पैशुन्य सर्वं विजहति सत्यवादी
वादेत्व वाद्यं जिनचैतियेषु ॥
अलंकारां कृत्व जिनचैतियेषु
स्नापित्व स्तूपानि तथागतानां ।
विशुद्धवाक्यो स्नपयित्व स्तूपं
रजो धोवमानो विरजस्य स्तूपा ॥
धर्मं करित्वा करिकारधर्मं
आरोग्यप्राप्तो चरे सर्वलोके ।
प्रशंसनीयो भवते जनस्य
कारीषि दत्वा जिनचैतियेषु ॥
अचण्डशीलो च अरिक्तधानो
प्राप्नोति सेवां धनसमृद्धं ।
आज्ञां करोति बहुकां जनस्य
कारीषि दत्वा जिनचैतियेषु ॥
श्मशानसंज्ञां जनयते इष्टिकासु

2. BC devesu lho īçvaratve manu° B °loke api ganto pū° C °loke upagantuṁ pū° BC °nīyo na°. — 4. C °yo vādyetva pādyaṁ°.

6. B na lokahiṁ° C naru kahiṁcijjanaye apramādaṁ na cāpi kiṁcit paru° B °pi kiṁcin paru°. — 8. C °hati satvavādī vādyetva° B °tyavādī vāde°. — 10. B kārikṛ° C kāritvakṛ° B °snāyitva stū° C °pitvā stū°.

12. C °vākyā snāpetya stū° B °kyo snāpetya stū° B °paṁ rajadhonamānaṁ | aarajasya smṛtya karikāradha° C °paṁ rajadhautamānaṁ narajāsya apriṣhṭāḥ |. — 14. B karikāradharmaṁ ā° C dharmaṁ ca kāritva ka° dharma ā° BC °rvalokaṁ |.

16. BC prasaṁçanīyo° B °sya kā riṣhi datvā ji° C °rishu datvā ji°. — 18. BC °prāptā na se° C °sei dhanam alpasatyaṁ | B °dhana alpasatyaṁ anyaṁ karo°. — 20. B anyaṁ karoti ba° C anya karo° BC °bahu ātmanasya | (C °syā) kā° B °kā riṣhi datvā ji° C °kāriṁ datvā.

22. BC smaçānasaṁjño ja° mahilā ca na ra° B °ktavitte |.

न कामलोलो च न रक्तचित्तो ।
लाभाय छन्दं [३२३ᵃ] जहति अशेषं
कारीषि दत्वा जिनचेतियेषु ॥
न चित्तपीडां जनये परेषु
न खाद्यभोज्येन जने सौमनस्यं ।
न च दरिद्रो स न चापि रोगी
कारीषि दत्वा जिनचेतियेषु ॥
अभिन्नपक्षो न च तस्य भोति
पूजेति बुद्धं सततं अभेद्यो ।
बुद्धं च धर्मं जिनश्रावकां च
कारीषि दत्वा जिनचेतियेषु ॥
क्षेत्रा सहस्रा बहवो अनन्ता
जाम्बूनदेन सिया सर्वपूरा ।
शक्यं क्षपेतुं गिरिमेव कृत्स्नां
न तैलबिन्दुं जिनस्तूपे दत्वा ॥
सदा च भोति वशि आत्मचित्ते
न चेष्टमानो व्रजति कदाचित् ।
अभिन्नहस्तो च अभिन्नपादो
कारीषि दत्वा जिनचेतियेषु ॥
उन्मार्गं सर्वं पि जहाति तेन
येन व्रजन्ते बहुदुर्गतीयो ।
विशोधितो स्य भवे स्वर्गमार्गो
कारीषि दत्वा जिनचेतियेषु ॥
नामेत्व चित्तं सहलोकनाथे

2. B lâbho ca cchando ja° C lâbhâva cchando ja° B °kârishî datvâ ji° C °riti datvâ ji°.
6. C na câpi dâridrya na câpi osarehi kârishi datvâ ji° B °dro na ca sa ohi kârishi datvâ ji°. — 8. B °bhoti satatam̐ abhedyâ pûjoti buddham̐ jina° C °buddham̐ satatam̐ abhedyâ | . — 10. B jinaçrâ° C °dharmam̐ ca jina çrâva kârishî datvâ ji° B °kârishi datvâ ji°.
12. C kshetrât sahasrâm̐ bahantu jâ° BC °jâmbunade° B °dena çriyâ sa° C °siya sarvapûrṇṇe çakyam̐°. — 14. C °kyam̐ kshepatum̐ çiri evam̐trâ° B °çiri eva° BC °vindu jinastûpa datvâ(C °tvâ | ) sadâ°.
16. B °âtmaceti na ceshṭa° C °âtmabhâvo na ceṭamâno°. — 18. C °sto ca abhinnavâde kârishi datvâ ji° B °kâṛishi datvâ ji°. — 20. BC °jahati tena bhonti yena vra°.
22. BC °dhitâ(C °ta) syâ çore eva° C °rgo kari° BC °vishu datvâ ji°. — 24. B nâmahâ ci° BC °tam̐ siyalokanâthaiḥ tai(C °thais taiḥ)°.

तैलस्य बिन्दुं जिनचैतियेषु ।
ददेय एकं शतधा करित्वा
तं पुण्यस्कन्धं क्षपयितुं न शक्यं ॥
यष्टिका गृह्य भगवतो चैतियेषु
पुण्यस्यार्थाय नरो चेडयेय ।
न तस्य जातु अमनोज्ञगन्धं
कायो स्य गन्धं लभे चन्दनस्य ॥
कल्पान कोटीनयुता सहस्रां
विशिष्टकायो भवते शुभाङ्गो ।
विघुष्टशब्दो वरलक्षिताङ्गो
शोधित्व स्तूपं पुरुषोत्तमस्य ॥
विमानश्रेष्ठं लभते सुगन्धं
दिव्यं मनोज्ञं वरचन्दनस्य ।
न तत्र तृष्णां जनये कदाचित्
शोधित्व स्तूपं पुरुषोत्तमस्य ॥
कोटीसहस्रं लभते अप्सराणां
मनोज्ञगन्धा च सुदर्शनीया ।
तासां न तृष्णां जनये कदाचित्
शोधित्व स्तूपं पुरुषोत्तमस्य ॥
अष्टाङ्गुपेतां जलशोभमानां
उद्यानश्रेष्ठां लभते पुष्करिणी ।
दिव्योत्पलेभि च शोभमाना
शोधित्व स्तूपं पुरुषोत्तमस्य ॥

2. C dadeyam ekaṁ° B °çatadhya kari° BC °tvā na pu° B °skandho kaha°. — 4. BC ishṭi(B ishi)kaṁ gri° dhu puṇyasya arthāya naro(C °ya jano) cetiyeshu | puṇyasyā(C °sya) arthāya naro vedhayeyaṁ | (C °yaṁ) na°.
6. C °jñagandho kāyasya gandhaṁ labhe° B °jñagandhaṁ labhe° BC °bhe canda°. — 8. B °çobhakā° vato çu° C °vata çubhāngo vi°. — 10. B vighushṭhaçabdo caralakshaṇāngo ço° C °lakshaṇāngo |.
12. BC °çreshṭaṁ la° °sya na ta°. — 15. BC °cit || ço° sya ko°.
16. C °labhati apsa° BC °gandhaṁ su°. — 18. BC °cit | ço° B °çodhatva° C °shṭāpā pu°. — 20. C °pataṁ ja° BC °çreshṭāṁ la° C °riṇyāḥ | B °riṇyāḥ di°.
22. B divyotpaleshi çobha° C °lehi çobha°.

परिवारस्तस्य भवते अनुरूपं
दिव्यं च घोषं शृणोति विशुद्धं ।
संगीतिशब्दानि सुरासुराणां
शोधेत्व स्तूपं पुरुषोत्तमस्य ॥
कथां च धार्मीं शृणे देवतानां
संस्कारा सर्वे च दुःखा अनित्या ।
ग्राह्यं च भोति वरदान दानं
शोधेत्व स्तूपं पुरुषोत्तमस्य ॥
जराभिभूतो उपगतो स्वर्गलोकं
न तस्य भूयो इतो दुर्गतीयो ।
स बुद्धं च पश्यति मर्त्यलोके
शोधेत्व स्तूपं द्विपदोत्तमस्य ॥
कथां च कृत्वा शुभ देव[113$^{b}$]तानां
स्थापेत्व देवा ध्वजबुद्धस्तूपं ।
कालं करित्व उपगमि मर्त्यलोके
शोधेत्व स्तूपं पुरुषोत्तमस्य ॥
सो जातमात्रो स्मरे कल्पानकल्पां
ये पूर्व बुद्धा पूजित सत्कृता च ।
नामं च तेषां स्मरति गणं च धर्मं
शोधेत्व स्तूपं द्विपदोत्तमस्य ॥
अनुलेपेन भगवतो यो करोति
पूजां विशिष्टां सुमनोज्ञघोषां ।
सो लब्धलाभो विचरति सर्वलोके
आदित्यसारो वरगन्ध दत्वा ॥

1. B pagi(?) vâtasyo bhavatânu° C °vâra tasyo bhavate anurupaṁ di ° çoti çuddhaṁ | . — 3. B °bdâni pura âsu° C °bdâni puraḥ âsu°. — 5. BC kathaṁ ca dharmo çrunye° C °skâra sa ° ḥkhâm anityâ | B °tyâ grâ°.

7. B °varadânaṁ ço° C °varadânamadânakaṁ ca ço°. — 9. BC janâbhibhûyo upa° C °gato sva° BC °loke na ta°.

11. B sa bu° C sa buddha dharmaṁ ca pa° BC °çyati satyalo°. — 13. BC °sthapetya de° C °devâḥ ba ° ddhajñâne | . — 15. B °martaloke°.

17. C °mâtrepa smarayesi kalpâṁ pûrvaṁ ca bu° B °pûrva bu°. — 19. B nâmaṁ ca ca te°.

21. BC °lepanena bha° C °shtâṁ sujñagandhâṁ so la°. — 23. B °ke | âdi° C °ke | adi° BC °sdha datrâ pra°.

प्रभुञ्जकाले जिनशासनस्य
न सो इहागच्छति जम्बुद्वीपे ।
स्वर्गेषु संधावति तस्मि काले
गन्धानुलेपं करियान स्तूपे ॥
दुर्गन्धकायां सुजुगुप्सनीयां
वर्जेति नित्यं स्थितो शीलस्कन्धे ।
सदा चरन्तो इह ब्रह्मचर्यं
गन्धानुलेपं ददियान स्तूपे ॥
इतो च्यवित्वा मरुस्वर्गलोके
अथ सहस्रा तुलयति अप्रमेयां ।
करोति अर्थं बहुदेवतानां
गन्धानुलेपं ददियान स्तूपे ॥
यस्मिं च काले नरा भोन्ति आढ्या
अदुष्टचित्ता मृदुमार्दवा च ।
तस्मिंस्तु काले स्थितो जम्बुद्वीपे
गन्धानुलेपं ददियान स्तूपे ॥
अपायभूमिं विजहिय सर्वां
आसन्नप्राप्तो स जिनस्य भोति ।
प्रतीतो भवति सुखप्रेमणीयो
गन्धानुलेपं ददियान स्तूपे ॥
विशिष्टवाक्यो भवति सुघोषो
प्रियो मनापो जनसत्कृतो च ।

1. C °bujyakâ° B °jinaçâsana° BC °sya ‖ tato i° C °hâgacchasi jambûdvî° BC °pe sva°. — 3. C °vati kâla tasmiṁ | ga° B °le | ga° BC °lepanaṁ ka° B °yâna stû° BC °pe du°. — 5. B °adhakâmâṁ su° C °mâṁ sujo° BC °yâṁ ‖ varjje ° skandho sa°.
7. C sadâ vara° BC °ryyaṁ | ga° C °nnepaṁ° B °yâna stû° BC °pe i°. — 9. BC °ke‖ adha sahasru tu° C °tulatiyameyâṁ B °yâṁ karo°.
11. BC °nâṁ | ga° C °lepa da° B °yâna stû° BC °pe ya°. — 13. B °nti âdyo ‖ adu° C °nti âdhyo | aduṣṭacitto mṛdumadavâ ca tasmi° B °vâ ca tasmi°. — 15. BC °dvîpe | ga° B °yâna stû° BC °stûpe apâ°.
17. B °vijahi sarvâṁ | âsanna° C °vijahi satvâ sarvaṁ | âsanna° BC °prâptâṁ jina° B °sya bhavati prati°. — 19. C prapri bha ° ṇîyaṁ | ga° B °ṇîyo ‖ ga° BC °nulepanaṁ da° B °diyâna stû° BC °pe viç°.
21. C °çiṣṭâ vâkyo° BC °to ca sa°.

मुखं च तस्य भवे सुप्रसन्नं
गन्धानुलेपं ददियान स्तूपे ॥
राजापि भोति वरचक्रवर्ती
श्रेष्ठी अमात्यो गृहपति पुण्यवन्तो ।
बुद्धो पि [भोति] प्रभंकरो धर्मस्वामी
गन्धानुलेपं ददियान स्तूपे ॥
मणिहारं दत्वा जिनचैतियेषु
उद्यचित्तो प्रमुदितो वेगजातो ।
सो भोति राजा सह लक्षणेहि
महानुभावो सुकृतो चक्रवर्ती ॥
मणिविमानं रुचिरं प्रेमणीयं
विचित्रवर्णं लभे दर्शनीयं ।
प्रासादमयं रत्नामयं च
महारहाहि स्फुट वेदिकाहि ॥
सो राजधानीं लभते विशिष्टां
नारीगणेहि नरसंप्रपूरां ।
समां सुजातां सुविभक्तरूपां
प्रभूतभोगां बहुजनो समन्ता ॥
सुभिक्षक्षेमां अपगतशर्करां
पुष्पावकीर्णां स्फुटावसक्तदामां ।
सुमनोज्ञघोषां प्रियदर्शनीयां

1. BC °nnaṁ | ga° B °gandhanu° C °lepe dadi° B °yāna stū° BC °pe rā°. — 3. BC rājā vibho ° vartī || çreshṭi(C °shṭi) amā ° nto bu°. — 5. BC °bhaṁkaradha° B °lepa dadiyāna stūpe | .

7. BC °ṇivālaṁ datvā ji°. — 9. C so bhavati rā° BC °rājasya sa(B °du)lakshu° C °kṛtaç cakra°.

11. C °naṁ ruru° BC °premaṇīyaṁ vi ° rçanīyaṁ pra°. — 13. B °nāmayaṁ mahārahakanehi sphu° C °yaṁ ca | olokanehi sphu ° kāhiḥ so°. — 15. BC so rūpadhārī labha ° çishṭaṁ(C °shṭaṁ | ) nā°.

17. B °jātaṁ su ° hasamantā subhi°. — 19. B °bhikshakshamā apa° C °bhikshamā(C °ajnā apa° B °çarkkara pushpā ° rṇṇāṁ sphuṭāvaçakta° C ° tā avaçakta°.

21. B °antishṭha uptaṁ ba° C ° antishṭaguptaṁ ba ° madhya udyānarasyāṁ çuddharūpāṁ | prabhūtabhogāṁ bahuçā samantāḥ subhikshamānā apagataçarkkarāṁ ca | pushpāvakirṇṇā sphuṭā avaçaktadāmāṁ sumanojñaghoshāṁ priyadarçanīyāṁ | antishṭaguptaṁ bahuçālimadhye udyā°.

अर्गडगुप्तां वज्रप्राकारमध्ये ॥
उद्यानरम्यां शुभशतसन्निनादां
जालविचित्रां [२२६a] सुखसंप्रवेशां ।
ध्वजपताकाहि स्फुटां सुरम्यां
छत्रेहि च्छन्नां शुभदर्शनीयां ॥
न तत्र चोरा न शठा न धूर्ता
राज्ये भवन्ति परवित्तहारी ।
ईर्यापथेन उपपेत सत्त्वा
विजिते वसन्ति सदा मैत्रचित्ता ॥
यतश्च देवां व्रजति सुपुण्यो
स्वर्गेषु भोति परिपृच्छनीयो ।
किं कार्य शुक्लं कथमाचरेम
यदा व्रजेम इतो मर्त्यलोके ॥
बुद्धांश्च क्षिप्रं लभे दर्शनीयां
पश्यित्व सो पूजति लोकनाथां ।
बोधाय च्छन्दं जनयति पूर्वं कृत्वा
तेनैव बुद्धा इतरत्र व्याकरोन्ति ॥
बहुज्ञानी भवति महानुभावो
विशेषभूमिस्थितो च यशस्वी ।
चित्तप्रसादं भगवतो एकं कृत्वा
कल्पसहस्रं जहे दुर्गतीयो ॥
आरोचयामि इमु भाषमाणो
मा कोचि कांक्षां जने भाषतो मे ।

2. C *saninâda | jâ* B *saṁninâdaṁ jâ* BC *jâlâṁ vici* B sukhatrâṁ supraveçâṁ ‖ . — 4. BC dhvajâpatâkâhi sphuṭâ suramyâṁ cchatrâhi channâṁ*.

6. BC *râjye bhavati paracittahâniṁ ‖ . — 8. B *thena sampeta* C *thena sa upetasattvâṁ jivite santi ca sadâ* B *jita santî sadâ* C *cittâḥ | .

10. BC *puṇyâ sva* C *svargaṁshu*. — 12. BC *kâryya çu* C *çukla ka* to sa martte iha dharmaloke | . — 14. B *kshipre la* BC *bhed dakshi* C *paçyanti te san pûjyati lokanâthaṁ | .

16. C *yati ca pû* BC *pûjâṁ kṛ* C *roti | . — 18. B alujñâni bha* C anujñâ bha* bhâvâ vi* BC *bhûmiṁ sthi* B *tve ci*. — 20. C cittopra* B *satâ e* C *sato eka kṛ* ṛpatiṁ yo(?) | B *rpate ya | .

22. C *imaṁ bhâshayâmî mâ kaçci kâṅkshâ ja*.

मा बुद्धज्ञानं विप्रिया ब्रवीषि
भवेय यथा सुदुःखितो कृच्छ्रप्राप्तः ॥
यो जालकानि उपनये चैतिकेषु
लोकप्रदीपे महापुण्यक्षेत्रे ।
सो मारजालं विधापिय अप्रमत्तो
भोति नरेन्द्रो दशबलो निष्क्लेशो ॥
अपायभूमिं विजहति अप्रमत्तो
सदा च बुद्धं इतरथ सत्करोति ।
सदा च भोति बलचक्रवर्ती
समन्तलोकं उपगत पुण्यवन्तो ॥
देवेषु भोति मरुपति पूजनीयो
दिव्यं च आयुं लभे तत्र चिरं ।
यशं च दिव्यं तथापि च दिव्यवर्णं
दिव्यं च सौख्यं अनन्तमीश्वरीयं ॥
रूपां च शब्दां तथ पुनर्गन्धश्रेष्ठां
स्पृष्टव्यां तथा लभे देवभूतो ।
उल्लोकनीयो भवति महानुभावो
न कामतृष्णां जनयति अप्सरासु ॥
ततो च्यवित्व व्रजति मनुष्यलोकं
सुगन्धिताङ्गो भवति विशिष्टवर्णो ।
न पारिहाणिं लभते कदाचित्
क्षोरेल जालं जिनचैतिकेषु ॥

1. C °ciṁ prāpta bhaveyā pa ° ṭkhita kṛi° B °cchraprāptaḥ yo jā°. — 3. C °ni upanaye ce° B °yeshu | lo ° dipo mahā ° kshetre so mā°. — 5. BC so mālajā° C °jālaṁ viridhāni ca apramatto | bhogā nare° B °tto | bhutā narendrā daçabalā nishkileçā apā° C °balanishkileço.

7. C °miṁ daçabala apra° BC °tto | sadā°. — 9. B yadā cā bho° C yadā ca bho° B °rtti | santaya lo° BC °loke u° B °gata puṇyavanto BC °nto de°.

11. C devaisha bhonti maru° B devesha bho ° rupatti pū° C °āyūṁ labhet tatra°. — 13. BC °içvaro yaṁ rū°. — 15. C °n tatha pūrṇagaṁdhāṁ | çreshṭāṁ santabdhāṁ labhed deva° B °tathā pu ° çreshṭāṁ | spashṭabdhāṁ labhe° BC °bhūto u°.

17. B °llokanī bha° BC °bhāva | na kā° C °paurāṇam. — 19. C °lokaṁ | su° BC °rṇṇo na pā°.

21. C °hāni la° B °hāṇi labhavo kadācit | cchore° C °cit | cchaletva jā° B °shu çā°.

शूरो च भवति दृढव्रत अप्रमत्तो
न कामभोगे सुरतिं जनेति ।
नैष्क्रम्यतो भवति अदीनचित्तो
छोरेत्व जालं जिनचेतियेषु ॥
सो अक्षणानि परिवर्जयित्वा
क्षणा च तस्य भवन्ति विशिष्टा ।
बुद्धान पूजां अतुलियां सो करोति
छोरेत्व जालं जिनचेतियेषु ॥
न बोधिचित्तं विजहति सो कदाचित्
न अपद्रशीलो भवति असंवृतो वा ।
धर्मं विरागं लभे सो विशुद्धं
छोरेत्व जालं जिनचेतियेषु ॥
दौर्वर्णियं च जहे सर्वकालं
दौष्प्रज्ञियं च विजह[२२५b]ति सो अशेषं ।
विशेषप्राप्तो विचरति सर्वलोके
छोरेत्व जालं जिनचेतियेषु ॥
लाभी च भोति शुचिभोजनानां
वस्त्रां विशिष्टां लभे सुवर्णचित्रां ।
रङ्गोपपेतां सुरुचिरदर्शनीयां
छोरेत्व जालं जिनचेतियेषु ॥
अभ्युद्गिरित्वान जिनचेतियेषु
निर्माल्यं तुष्टो प्रमुदितो वेगजातो ।
दुःखां खरां वाचं (?) जुगुप्समानो

1. B çûlo ca bha° C çûro bha°. — 3. C naiṣkramyamâno bha° B °shkramâto bha° ti° echoletvaraṃ jâ° °sha so a° C °tto echoletva satvaṃ jâ°. — 5. BC °bhavati viçishṭho |. —
7. C buddhaç ca pû.° ti echâletva jâ° B °ti echâletva jâ° °sha na bo°. — 9. C °dhiṣatvaṃ vija°.
11. B °echoletva° C °echoletva°. — 13. B dauvarṇṇayaṃ jahe° C dauvarṇṇaṃiyaṃ ca jahe° B °sarvaṃ kâ° C °laṃ dushpra° B °shprajñayâṃ ca vi°. — 15. B °ke echoletva jâ° C °echoletvâ jâ°.
17. C °nâṃ citrâṃ viçishṭa labhe° B °nâṃ vistrîṃ viçishṭîṃ labhe°. — 19. B °yâṃ echâretva° C °yâṃ echâletva°.
21. C °rmâlya dushṭo° B °lyaṃ dushṭo° C °jâtoḥ |. — 23. C °kharâṃ ca sa jugupsanîyaṃ âcâ° B °kharâṃ jugupsanîyâṃ âcâ°.

आरागये सो दशबलसार्थवाहं ॥
प्रासादिको भवति विशुद्धकायो
उलोकनीयो बहुजनपूजितो च ।
न तस्य राजा भवे दुष्टचित्तो
यो चैतिये अपनयि जीर्णपुष्पं ॥
कुमार्ग तस्यापिहिता भवन्ति
यो शीलस्कन्धे स्थितो बोधिसत्वो ।
अभ्युद्धरेया जिनचैतियेषु
ओसिरे पुष्प पुरिमं शिवानं ॥
शोकं च दोषं च जहे सर्वकालं
रागां च काये जहे सर्वं अशेषां ।
आश्वासप्राप्तो सो अनन्तकल्पां
यो चैतिये अपनये जीर्णपुष्पं ॥
बुद्धो च भोति महसार्थवाहो
अनन्ततेजेन महपूजनीयो ।
अलंकृतो भवति विशुद्धकायो
यो चैतिये अपनये जीर्णपुष्पं ॥
पंच ददेया सुरभिदिव्यपुष्पां
मान्दारवां अथ पाटलां वा [निर्माल्यां] ।
यो जीर्णं पुष्पं अपनये चैतियेषु
विपाकु तस्य भवति स शोभमानो ॥
न तस्य काये क्रमति विषं न शस्त्रं
हुताशनं ज्वलितो अग्निस्कन्धो ।

2. BC °jito ca na ta°. — 4. BC °dushṭhaci° B °tto yā ceti° BC °yi jīrṇapushpaṃ | .
6. C kumāga tasyāpi ° ndhe sthita bo° BC °tve abhyu°. — 8. B °yeshu | osirapu° C °osire pu° BC °naṃ ço°. — 10. B °laṃ | rāgaṃ ca kā° C °laṃ rāgaṃ ca kā.° rvaçeshāṃ | B °shāṃ āçvā°.
12. C °pto so ananta° B °lpāṃ | yo ce° BC °shpāṃ bu°. — 14. C °tejo marūpā° B °nīyo alaṃ°.
16. B °kāyo | yo ce° C °kāyo yo ce° B °shpaṃ paṃ°. — 18. B °pushpaṃ | mā° C °pushpaṃ mandā° B °ravāṃ atha pā° C °pāṭalāṃ vā° BC °rmālya so°. — 20. BC so apanaye catiyeshu | vi° C °pākakūṭasya° B °tasyo bha° BC °ti sa çobhano(C °ne) na ta°.
22. C na tasyaiva kā ° straṃ | hu ° naṃ ca jvalitā agniskandhau ca° B °tāsano jvalitāgniskandho ca°.

चौरा पि तं न प्रसहन्ति पापा
यो जीर्ण पुष्पं अपनये चेतियेषु ॥
न तस्य पुण्यं सुकरं प्रकीर्तितुं
यत्नेन पुण्यं सुमहत् गृहीतं ।
ओसक्तपुष्पं जिनचेतियेषु
कोरेत्व तुष्टो प्रमुदितवेगजातो ॥
उद्विद्धकायो भवति उदारो
सदा चरन्तो शुभकर्मयेहं ।
न तस्य दूरे वरमग्रबोधि
कोरेत्व निर्माल्यं जिनस्य स्तूपे ॥
यो चन्दनं किरेय नायकस्य
छन्दं जनेत्वा परमार्थबोधे ।
सो भोति लोके सद पूजनीयो
प्रासादिको सुमनो तेजवन्तो ॥
तस्यैव राज्ञो प्रणमति सर्वलोको
देवा नागा च मनुजा महोरगा [च] ।
सर्वां सहस्रां कुसुमितलोकधातुं
प्रशासि धीरो ततो ईश्वरत्वे ॥
ये तस्य राज्ये निवसन्ति लोके
प्रतिष्ठन्ति ते वरबुद्धिज्ञाने ।
ते सर्वपापेषु अतिक्रमित्वा
देवमनुष्येषु चरन्ति धर्मं ॥
परिवारस्तस्य भवति अभेद्यो

1. B cauro pi ° pâpaṁ sa° C cauro pi taṁ na prajahanti pâpaṁ yo° B °jirṇnapu°. — 3. C °oyaṁ mahatâ gṛi° B °oyaṁ sumahata gṛi°. — 5. C °ahu echâdetva° B °ahu | echo° BC °jito u°.

7. C °kâye bha° C °ro | sa° B °ule | ça° BC °grahitaṁ na ta°. — 9. B °sya dure va° BC °varamagrabodhiṁ echore(C °de)tva nirmâ(B °nirmâ)lya ji°.

11. C yo candanaṁ ca kare° B °naṁ kare ° ndaṁ janayitva pa° C °netra pa° BC °bodhaye | . — 13. B °ukye prâ° BC °dikâ su°. — 15. C °râjâ praṇa ° loke de° BC °devâ ca nâ° C °ragâḥ sarvâṁ°.

17. BC °srâṁ sukumi ° taṁ prâsâsi sî° C °ratvaṁ | . — 19. BC °shṭhate ti vara°.

21. BC °shu abhikra° C °devâmanu°. — 23. BC °vâritasyâ bhavati abhedya pa° C °ti-vanto pra° BC °prajñâvanto | .

पुण्यवन्तो धृतिवन्त प्रज्ञवन्तो ।
आ[२२५ᵇ]यासप्राप्तो विचरति सर्वलोके
यथाभिप्रायं जनयति तेषु प्रीतिं ॥
प्रपूरवाक्यं स्वराङ्गं भवति शुद्धं
ज्ञापेति सत्वान् सुमधितव्यञ्जनवाक्यो ।
न तस्य कोपि जने ईरयेयं
उल्लोकनीयो भवति बहुजनस्य ॥
प्रियवच दानं तथ अर्थचर्यां
समानार्थता च बहुजनस्य ।
अकुष्टवन्तो न जनेति रोषं
यो अंगुलीहि नमे बुद्धस्तूपं ॥
न सो अपायं प्रपतेय भूयः
वर्जेति हीनां कुल मर्त्यलोके ।
आढ्यश्च सो भोति प्रभूतकोशो
यो अंजलीये वन्दति बुद्धस्तूपं ॥
देवेन्द्र भोति सत देवलोके
मनुष्यभूतो पि च भोति राजा ।
न पारिहानि च कदाचि तस्य
यो अंजलीये वन्दति बुद्धस्तूपं ॥
अयुक्तवाचं न कदाचि भाषे
सुभाषितं भाषति नित्यकालं ।
अतृप्त सत्वा वचनेन तस्य
यं सो प्रमुंचेद्वरमेकवाचं ॥

2. C °priti |. — 4. BC °ti çuddho jñâyeti° C °satvâm̃ sumukhilo ḍha°.
6. C °tasya kâri(?) jane° B °ko vi jane° BC °niyam̃ bha° °naeyu pri°. — 8. BC °nam̃ | ta° °caryâm̃ sa° B °nârthâm̃ ca ba° C °rthavanto ba° BC °sya a°. — 10. C akushṭe na ja° B akushṭava° BC °sham̃ | yo angu(C am̃ja)lîhi na° °stûpe na so apâ°.
12. BC na so apâ° B °yaḥ | va° BC °kula martyaloké âḍhya°. — 14. BC °ço || yo am̃jaliye va° °pam̃ de°.
16. B °loke | ma° C °loke ma° B °râjâ na°. — 18. B na khâri hâ° BC °hânim̃ ca kadâcit tasya° B °sya | añjaliye va° C °liyo vadanti bu°. — 20. BC ayoktapatram̃ na kadâcid bhâshe m°.
22. B °vâcâm̃ |.

कालं करोन्तो जिनमद्दशासि
मनोज्ञघोषां वसे राजधानीं ।
सो इन्द्रकीलि स्थित लोकनाथं
पुष्पां गृहेत्वा अभिकिरे वेगजातो ॥
स्वकस्मिं गृहे जिनमद्दशासि
भुंजित्व भक्तं वदन्त धर्मं ।
प्रसादजातो जिन सत्करोति
गृहीत्व पात्रं व्रजे नायकस्य ॥
प्रतिगृह्णते तस्य जिनोऽन्तिकातो
आख्यान चित्तं चरितं उदारं ।
तस्य यशो भेष्यति देवलोके
विशिष्ट लोके असदृशो दक्षिणीयो ॥
गृहीत आत्मा सुगतेन पात्रं
सो वेगजातो परितुष्टचित्तो ।
उल्लोकयित्वा तद देवलोकं
जनेय छन्दं इममेवरूपं ॥
मोचेय सत्वां बहुदुःखप्राप्तां
अन्धान चक्षु भिय सर्वलोके ।
आलोकप्राप्तो तमतिमिरस्य घाती
अतीर्णसत्वानहमपि तारयेयं ॥
अमुक्त मोचेयमसंस्कृतातो
स्पृशित्व शान्तां वरमग्रबोधिं ।
चरे अहं दशदिशा असंप्रकंपो
तुलित्व ज्ञानं दुःखितां प्रमोचे ॥

1. B °rontā jinaru adriçāmi ma° C °ronti jinam addriçāmi ma ° dhānī | . — 3. BC °kīlo sthi° C °slpām grihitvā° BC °bhikile ve°. — 5. C svapañcakasmim gri ° daçāmi bhum° B °daçāñai bhum° C °kam ca va° BC °danti dha°.
7. BC prāsāda° B °vrajemsya°. — 9. BC °grihnate° C °jino nti° BC °cittam°.
11. B °viçishthalo°. — 13. C °trum si ve° B °jāta pari°. — 15. B °trā tta devalo° C °tada lovalokam janeya echandañai yam eva° B °chandasi yam eva°.
17. C °satvo ba° BC °prāptam andhā°. — 19. C °pto tamatimirasya ghātī attirna° pi tārampeyam | .
21. C °[illegible] nmam ° tu prisi° BC °çānto vara°. — 23. C rahañ hi daçamahim hi sa pra° B cale aham daçahi sam° BC °buddhatva jñā° C °ḥkhita pramuca | .

ज्ञात्वान तस्य प्रणिधिमेवरूपां
यथा ते चित्तं ततो बुद्धज्ञाने ।
स्मितं करित्वा जिनो व्याकरोति
बुद्धो तुवं भेष्यसि लोकनाथो ॥

इदमवोचद्भगवानात्तमना विशुद्धमति भिक्षुः सदेवमानुषासुरलोको भगवतो भाषितमभ्यनन्दे ॥

अवलोकितं नाम सूत्रं महावस्तुस्य परिवारं समाप्तं ॥

बोधिसत्वो यथा वीरो नैरंजनामुपागमे ।
अथ कालो महा[२२५b]नागो एकको व अनुचिन्तयत् ॥
यथायं रणते पृथिवी कंसपात्रीव ताडिता ।
निःसंशयं महावीरो बोधिं प्रादुर्भविष्यति ॥
रणतीं पृथिवीं श्रुत्वा शब्दघोषसमाकुलां ।
भवनातो उत्तरित्वान समन्तां स विलोकये ॥
विलोकयन्तो महानागो असदृशं पुरुषोत्तमं ।
अग्निस्कन्धं ज्वलमानं विद्युं वापि घनान्तरे ॥
नैरंजनायां तीरे अद्भुतगामि अनिघो पुरुषसिंहो ।
घृतकृतनिभाननसं नागो काल भवनं वन्दे ॥
ततो उद्ग्रो समानो प्रीतिसुखसमर्पितो ।
बोधिसत्वं नमस्यन्तो इमां गाथामभाषत ॥
यादृशा मे पुरा दृष्टा लोकनाथा महायशाः ।
तेषां तुवं पि सदृशो अत्र मे नास्ति संशयः ॥

1. B °ṇidhi evarū° C °yathaiva ci° BC °ddhajñāne smi°. — 3. C °buddhaṃ stavaṃ° B °buddho tu°. — 5. B °viçumati bhi° C °mānuṣo ca loko°.

7. C iti çrīmahāvastuavadāne avalo°. — 8. C °yadā vīro nai°. — 9. BC atha kolo ma° kakeçam anu° B °ntayasa | C °ntayaṃ | . — 10. C yathā raṇate pṛ° B °vī kaṃçapā° C °pātreva tā°.

11. BC niḥçaṃsayaṃ°. — 12. C raṇatiṃ pṛ° BC °thivī çru°. — 13. C °samantena vi° B °ntāṃ na vi°. — 14. C °lokayaṃ ma° B °asadṛçā pu° C °dṛça pu°. — 15. B °dyaṃ vātra gha° C °vāta gha°.

16. C °gāmī anighoṣa pu° B °gho | puru°. — 17. BC °nāgakālasamaye bhavanāto vande ||. — 18. BC °dagrā sumano pri°. — 19. C °bhāṣi || B °ṣati | . — 20. BC °dṛṣṭvā lo° C °yaçā | .

यथा उद्धरसे पादं दक्षिणं पुरुषोत्तम ।
दिशामभिविलोकेन्तो अद्य बुद्धो भविष्यसि ॥
यथेयं रणते पृथ्वी कंसपात्रीव ताडिता ।
निःसंशयं महावीर अद्य बुद्धो भविष्यसि ॥
यथा च भवनं मह्यं अन्धकारतमिस्रकं ।
ओभासेन स्फुटं सर्वं अद्य बुद्धो भविष्यसि ॥
यथा विमानो तेजेन स्फुटो तिष्ठति सर्वशो ।
निःसंशयं महावीर अद्य बुद्धो भविष्यसि ॥
यथा च विमला मेघा विधुता मम नायक ।
निःसंशयं महावीर अद्य बुद्धो भविष्यसि ॥
यथा चीवरनिक्षेपा यथा च अवगाहसि ।
नैरंजनां शीतजलां अद्य बुद्धो भविष्यसि ॥
यथा नैरञ्जना रम्या कुसुमेहि समाकुला ।
निःसंशयं महावीर अद्य बुद्धो भविष्यसि ॥
यथा च पुष्पा वर्षन्ति देवा क्षिपन्ति अम्बरा ।
वृक्षा च प्रणता सर्वे अद्य बुद्धो भविष्यसि ॥

शुचिजलं च वहते प्रतिपूर्णं
पार्थिवोत्तमसुतो अवगाह्य ।
अभ्युदयन्तो अभिषेचयित्वा
उपागमे पुरिममुत्तनिपक्वां ॥
सर्वंमहीं सचतुर्द्वीपसशैलां
खेडपिण्डं व अनपेक्षो जहित्वा ।

1. C yathā me uddha° BC °ttamaṁ | . — 2. C °lokyanto a° B °vishyati | . — 3. C yathāyaṁ ra° pātreva tāḍitāḥ | . — 4. B °vīro a° C °vīro a° shyati || . — 5. B °bhagavān ma° C °bhagavan ma° BC °kāratimisakaṁ | .
6. B °shyati || . — 7. C °vimāna° sphuṭaṁ ti° B °rvaço nih°. — 8. B niḥçaṁçayaṁ° C niḥçaṁçayaṁ saṁçayaṁ ma° BC °vīro adya°. — 9. C °çuddha ma° BC °yakaḥ | . — 10. BC niḥçaṁçayaṁ° vīro a° B °vishyati | .
12. C °rañjanā çī°. — 13. C °kulāḥ | . — 14. BC niḥçaṁçayaṁ mahāvīra a°. — 15. B °pushpa va° C °pushpa varsheti devāḥ kshapanti° B °sā kshapanti° BC °mbarāḥ | .
16. C vṛkshāgra praṇa° B °shyati || C °shyati çu°. — 17. B °pratipūrṇṇa(?) pā° BC °vagrāhya° B °hya gātra abhyu° C °hya gātrābhyu°. — 19. BC °sheeestā upādhame | pu°dyāṁ sa°.
21. C sarvaṁ mahīṁ sa ca° BC °caturdvī° lāṁ | khedapiṇḍam iva a° tvā yāce°.

याचे स्वस्तिकं तृणां वरसिंहो
यत्र निषत्स्य स्पृशे वरबोधिं ॥
तस्य तृणां मृदुकतूलनिकाशां
स्वस्तिको कनकबिम्बनिभस्य ।
वेगवातु अददे तृणमुष्टिं
तां गृह्य च मृदुतूलांगुलपाणिः ॥

अथ खलु बोधिसत्त्वो सिंहविक्रान्तं विक्रमे अनुत्तरस्य अमृतस्य आहरणता[226ª]ये । नागविक्रान्तं विक्रमे । ऋषभविक्रान्तं विक्रमे । हंसविक्रान्तं विक्रमे । क्रोष्टुविक्रान्तं विक्रमे । दुष्प्रधर्षविक्रान्तं विक्रमे । अग्रोत्पादविक्रान्तं विक्रमे । श्रेष्ठोत्पादविक्रान्तं विक्रमे । पूर्वोत्पादविक्रान्तं विक्रमे । युगोत्पादविक्रान्तं विक्रमे । प्रणिधिपूर्वोत्पादविक्रान्तं विक्रमे । शत्रुमथनविक्रान्तं विक्रमे । अपराजितविक्रान्तं विक्रमे । महापुरुषविक्रान्तं विक्रमे । अलीनविक्रान्तं विक्रमे । अदीनविक्रान्तं विक्रमे । अहीनविक्रान्तं विक्रमे । अभीतविक्रान्तं विक्रमे । हितैषीअनन्धकारीकरणताये महाविक्रान्तं विक्रमे । महासंग्रामविजयाये अनुत्तरस्य अमृतस्य आहरणताये विक्रान्तं विक्रमे ॥

अथ खलु बोधिसत्त्वं सिंहविक्रान्तं विक्रमन्तं । नागविक्रान्तं विक्रमन्तं । ऋषभविक्रान्तं विक्रमन्तं । हंसविक्रान्तं विक्रमन्तं । क्रोष्टुविक्रान्तं विक्रमन्तं । दुष्प्रधर्षविक्रान्तं विक्रमन्तं । अग्रोत्पादविक्रान्तं विक्रमन्तं । श्रेष्ठोत्पादविक्रान्तं विक्रमन्तं । पूर्वोत्पादविक्रान्तं विक्रमन्तं । युगोत्पादविक्रान्तं विक्रमन्तं । प्रणिधिपूर्वोत्पादविक्रान्तं विक्रमन्तं । शत्रुमथनविक्रान्तं विक्रमन्तं । अपराजितविक्रान्तं विक्रमन्तं । महा-

1. BC °sharuṇo spr̥çe vara°. — 3. B °ṇāṁ mridukūla° C °dutūlani ° bhasyā va° B °sya va°. — 5. BC °tu adaye tr̥ṇ BC °gr̥hya mr̥ṇ° C °lāṁgulīṁ pāṇiḥ ‖.

7. BC °amr̥tasya āraṇatāye | . — 9[2]. BC dushyadha° C °dharmavikrā°. — 9[3]. C agrotpādavikrame | . — 10[1]. BC çreshṭotpā°.

11[3]. BC çatrurmatha°. — 12[2]. *Le passage compris entre 12[2] et la fin du paragraphe est répété dans B et C, la répétition est désignée par b c.* — 13[1]. c° kramena | . — 13[3]. Bb Cc atītavi°. — 14[1]. Cc °ahitandhamakārī° b °anandhakārī° C °çatāyair mahā°. — 14[2]. C mahāgrā° c ° yāye amr̥tasya anuttarasya āha° C °mr̥tasya āraṇatāye mahānāgavikrā° bc °tāye mahāvikrā ° kramati ‖ a° BC °krame | all°.

16[1]. C °satvo siṁ°. — 17[1]. C haṁsavikrāntaṁ | taṁ vikrama°. — 17[2]. C kroṁçavikrā°. — 17[3]. BC dushyadha° C °dharmavikrā°. — 18[1]. C agotpāda° kramaṁ çre°. — 18[2]. C çreshṭotpā°. — 19[1]. C °mantaṁ | pūgo(?)tpādavikrāntaṁ vikramantaṁ | praṇi°. — 20[1]. BC çatrurmatha° C °kramaṁ | . — 20[2]. C °kramaṁ | . — 20[3]. C °kramaṁ.

